श्रीजैन–आत्मानन्द–ग्रन्थरत्नमाला–द्वाषष्टितमं रत्नम् ( ६२ )

नवाङ्गिवृत्तिकारश्रीमदभयदेवसूरिरचिते

# पञ्चनिर्ग्रन्थी–प्रज्ञापनोपाङ्गतृतीयपदसंग्रहणीप्रकरणे ।

( सावचूर्णिके )

न्यायाम्भोनिधि–श्रीमद्विजयानन्दसूरीश्वरशिष्य–प्रवर्त्तकश्रीमत्कान्तिविजय–मुनिपुङ्गवशिष्य–
मुनिचतुरविजयेन संशोधिते ।

सुसाध्वी–श्रीमती–चतुरश्री–उपदिष्ट–पत्तनवास्तव्यश्रीमालिज्ञातीयश्रेष्ठिवर्य–झवेरचन्द्रात्मज–
सुरजमल्ल–भार्या–मणिबेनद्रव्यसाहाय्येन

प्रकाशयित्री–भावनगरस्था श्रीजैन–आत्मानन्द–सभा ।

इदं पुस्तकं मोहमय्यां वल्लभदास–त्रिभुवनदास गाधी सेक्रेटरी श्रीजैन–आत्मानन्दसभा भावनगर इत्यनेन
निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २३ तमे गृहे, रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४४. आत्मसंवत् २२ विक्रमसंवत् १९७४.

माभावे निर्ग्रन्थशब्दार्थसंगत्यभावात्। ननु मूलनिर्ग्रन्थ–प्रभेदनिर्ग्रन्थयोः कः प्रतिविशेषः?, उच्यते, मूलनिर्ग्रन्थत्वं मोहनीयकर्मणः क्षयोपशमादिप्रकारेण [ उदय ] सद्भावेऽपि स्यात्। प्रभेदनिर्ग्रन्थत्वं तु मोहनीयस्योपशमनया क्षपणया वा सर्वथोदयाभावे एव स्यादिति महान् विशेषः। लब्धिपुलाको लब्ध्युपजीवनेन चारित्रस्यासारीकरणाद्भवति। आसेवनापुलाकस्तु ईषदीषदतिचारासेवनेन सर्वांविराधकत्वाच्चारित्रस्याल्पतरविराधकः। वकुशोऽतिचारानाश्रित्य तु किंचिदधिकतरविराधकः। पुलाकात्तु वकुश उपलक्षणादेहविभूषादिप्रसक्तोऽप्यतिचारलाघवेन विशुद्धः। कुशीलस्तु द्विविधोऽपि ज्ञानाद्युपजीवनेन कषायासेवनेन च स्फुटमेव भेदमापन्नोऽस्ति। संयमस्थानान्याश्रित्य पुनरादौ पुलाकेन मध्ये वकुशेन तुल्योऽपि अग्रतस्तौ व्यतीत्य तिष्ठन् विशुद्धतरः। इत्येतेषां पञ्चानामपि प्रतिविशेषस्वरूपमिति। एतेषां च पञ्चानामपि निर्ग्रन्थानामयं क्रमोपन्यासो विशुद्धिक्रमापेक्षः संभवति। यथा—सर्वस्तोका विशुद्धिः पुलाके १। ततोऽधिका वकुशे २। ततोऽधिका कुशीले ३। ततोऽप्यधिका निर्ग्रन्थस्नातकयोः ४–५। स्नातकस्य तु संशुद्धज्ञानदर्शनादिगुणप्राप्त्या मोहनीयादिकघातिकर्मक्षयेण चाधिकत्वं निर्ग्रन्थात्। इह च क्षेत्रेऽधुना वकुश–कुशीलावेव स्तः। शेषत्रयं तु व्यवच्छिन्नम्। तदुक्तम्—"नग्गंथसिणायाणं, पुलायसहियाण तिण्ह वुच्छेओ। वउसकुसीला दो पुण, जा तित्थं ताव होहंति ॥ १ ॥"

**पंच नियंठा भणिया, पुलायबउसा कुसीलनिग्गंथा। होइ सिणाओ य तहा, इक्किक्को सो भवे दुविहो ॥४॥**

निर्गता बाह्याभ्यन्तराद् ग्रन्थादिति निर्ग्रन्थाः—साधवो भणिताः। तेषु 'पुलाय' इति पुलाकः—निःसारो धान्यकणः,

पाण्डित्यतपआदिकृतं यशश्च प्रार्थयते । 'तस्मिन्' यशसि जाते सति 'तुष्यति' हृष्यति । सुखशीलः न च बाढं यततेऽहोरात्रं 'क्रियासु' धर्मानुष्ठानेषु ॥ १७ ॥

**परिवारो य असंजम, अविवित्तो होइ किंचि एयस्स । घंसियपाओ तिल्लाइमसिणिओ कत्तरियकेसो ॥१८॥**

एतस्य परिवारः 'असंयमः' असंयमवान्, 'अविविक्तः' वस्त्रपात्रादिस्नेहादपृथग्भूतः, 'घंसियपाओ' इति घर्षितपादः—तैलादिना मसृणितः कर्त्तितकेशः ॥ १८ ॥

**तह देससव्वछेयारिहेहिं सबलेहिं संजुओ बउसो । मोहक्खयट्ठमब्भुट्ठिओ अ सुत्तम्मि भणिअं च ॥ १९ ॥**

तथा देशच्छेदसर्वच्छेदार्हैः शबलचारित्रैः संयुतो बकुशो मोहक्षयार्थमभ्युत्थितः । सूत्रे भणितं च ॥ १९ ॥ तदुत्तरगाथयाह—

**उवगरणदेहचुक्खा, रिद्धीजसगारवासिया निच्चं । बहुसबलछेयजुत्ता, निग्गंथा बाउसा भणिया ॥ २० ॥**

उपकरणदेहशुद्धा ऋद्धियशःसातगारवाश्रिता अविविक्तपरिवाराश्छेदयोग्यशबलचारित्रयुक्ता निर्ग्रन्था बकुशा भणिताः ॥

**आभोगे जाणंतो, करेइ दोसं अजाणमणभोगे । मूलुत्तरेहिं संवुड, विवरीय असंवुडो होइ ॥ २१ ॥**

**अच्छिमुहमज्जमाणो, होइ अहासुहुमओ तहा बउसो ।**

साधूनामकृत्यमेतदिति जानन् कुर्वन्नाभोगबकुशः १ । अजानन् कुर्वन्ननाभोगबकुशः २ । मूलोत्तरगुणैर्युक्तो लोकेऽविज्ञातदोषः संवृतबकुशः ३ । विपरीतो लोके प्रकटदोषोऽसंवृतबकुशः ४ ॥ २१ ॥ 'अक्षिमुखादिमार्जयन्' नेत्रमलाद्यप-

# प्रस्तावना ।

इह हि अतिभीषणपञ्चमारकस्य प्रबलप्रभावत्वेनानवरतहीयमानबुद्धिबलानामतिगम्भीरजैनागममध्यवर्त्तिसूक्ष्मपदार्थविचारजिज्ञासूनां संक्षिप्तरुचीनां भव्यप्राणिनां जिज्ञासापरिपूर्त्तये सदयहृदयैः परोपकारपरायणैर्नवाङ्गिवृत्त्याद्यनेकग्रन्थरचयितृभिश्चन्द्रकुलाम्बराहर्मणिभिः श्रीमद्भिरभयदेवसूरिशक्रैः पञ्चमाङ्गस्य पञ्चविंशतिशतकस्य सङ्ग्रहणीरूपं प्रज्ञापनादिषट्त्रिंशद्द्वारैः पुलाक–बकुश–कुशील–निर्ग्रन्थ–स्नातकानां स्वरूपाविर्भावकं षडुत्तरशतगाथानिबद्धं पञ्चनिर्ग्रन्थीनामकं प्रकरणरत्नं गुम्फितम्, तच्च—

"श्रीअभयदेवसूरिकृता पञ्चनिर्ग्रन्थी समाप्ता ॥"

इत्येतस्य पञ्चनिर्ग्रन्थीप्रकरणस्यावसानेऽनेकेष्वादर्शेष्वेतद्वाक्यस्यावलोकनात्प्राचीनपुस्तकसूचीपत्रेष्वप्येतेषामेव सूरिशेखराणां नामदर्शनाच्च श्रीमदभयदेवसूरिभिरेतत्कृतमिति संभाव्यते ।

अस्योपरि सुखावबोधाय परोपकृतिरसिकेन केनचिद्विद्वद्वर्येणावचूर्णिरपि कृतास्ति । परं किं नामधेयेनैषा कृतेति निर्णेतुं न शक्यते स्वकीयाभिधानानभिधानात् ।

द्वितीयप्रकरणं तु प्रज्ञापनोपाङ्गस्य बहुवक्तव्याभिधानतृतीयपदात्संगृह्य दिग्विभागादिसप्तविंशतिद्वारैः पृथिव्यादीनामल्पबहुत्वस्वरूपनिरूपकं त्रयस्त्रिंशदधिकशततमगाथाभिः सुनिबद्धं प्रज्ञापनोपाङ्गतृतीयपदसङ्ग्रहणीरूपं प्रकरणरत्नमनन्तरोपदर्शितैरेवाचार्यवर्यैर्विरचितम्, तच्च—

"इय अट्ठाणउइपय सत्तजियप्पबहुमिइ पयं तइयं । पण्णवणाए सिरिअभयदेवसूरीहिं संगहियं ॥"

इत्येतस्याः संग्रहण्या अन्तिमगाथानिर्वर्णनेन श्रीमदभयदेवसूरीणामेतत्प्रकरणकर्तृत्वं प्रकटमेव ।

अस्य प्रकरणद्वयस्य प्रणेतारः श्रीमन्तोऽभयदेवसूरयः कदाऽभूवन् ? इत्येतद्विषयस्य निर्णयस्तु–विक्रमार्कीयैकादशशताब्द्या उत्तरार्द्धे द्वादशशताब्द्याः पूर्वार्द्धे एवैतेषां सत्तासमय इति नवतत्त्वभाष्यविवरणप्रस्तावनायां सुनिर्णीतः । एतेषामभिजनादि जिज्ञासुना तु प्रभावकचरित्राद्या ग्रन्था अवलोकनीयाः ।

**एवं चिय रागंमि वि, आइमचउरो सराग त्ति ॥ ३८ ॥ दारं ३ ॥**

स्त्रीवेदवर्जः पुलाकः, स्त्रियाः पुलाकलब्धेरभावात् । नपुंसकवेदकस्त्वसौ स ज्ञेयो यः पुरुषः सन् नपुंसकवेदको वार्द्धितकत्वादिभावेन भवति, न स्वरूपेण । वकुशादयोऽप्येवमेव नपुंसकवेदका ज्ञेयाः । वकुशप्रतिसेवकाः त्रिवेदाः, पुलाकवकुशप्रतिसेवाकुशीलानामुपशमश्रेण्योरभावात् । कषायकुशीलस्त्रिवेदः प्रमत्ताप्रमत्तापूर्वकरणं यावत् । अनिवृत्तिबादरे तु उपशान्तेषु क्षीणेषु वा वेदेषु उपशान्तवेदः क्षीणवेदो वा स्यात्, सूक्ष्मसंपरायो वा ॥ ३७ ॥ निर्ग्रन्थ उपशान्तवेदः क्षीणवेदो वा स्यात्, श्रेणिद्वयेऽपि निर्ग्रन्थत्वभावात् । स्नातकः क्षीणवेद एव, क्षपकश्रेण्यामेव स्नातकत्वभावात् ॥ द्वारं द्वितीयम् २ ॥ पुलाकवकुशप्रतिसेवनाकुशीलकषायकुशीलाः सरागा एव । निर्ग्रन्थस्नातकौ उपशान्तक्षीणरागौ ३८ ॥ द्वारं तृतीयम् ३ ॥

**पढमो अ थेरकप्पो कप्पाईया नियंठगसिणाया । सकसाओ तिविहोऽवि य, सेसा जिणथेरकप्प त्ति ॥ दारं ४**

पुलाकोऽत्र प्रथमः, स स्थविरकल्प एव । निर्ग्रन्थस्नातकाः कल्पातीताः, यतस्तेषां स्थविरकल्पजिनकल्पादिधर्मा न सन्ति । कषायकुशीलस्त्रिधापि, छद्मस्थकषायकुशीलतीर्थकरस्यापि कल्पातीतस्य संभवात् । वकुशप्रतिसेवनाकुशीलौ जिनकल्पस्थविरकल्पस्थितौ, न कल्पातीतौ ॥ ३९ ॥ द्वारं चतुर्थम् ४ ॥

**आइमसंजमजुअले, तिन्नि उ पढमा कसायवं चउसु ।**
**निग्गंथसिणाया पुण, अहखाए संजमे हुंति ॥ ४० ॥ दारं ५ ॥**

अस्या' प्रज्ञापनोपाङ्गतृतीयपदसंग्रहण्या याऽवचूर्णिर्मुद्रयित्वा प्रकाश प्रापितास्ति सा केन विदुषा कृता ? इत्यभिधानाभावान्न सम्यग् निर्णेतुं शक्ताः, पर तृहत्तपोगच्छभट्टारकश्रीमद्देवसुन्दरसूरिशिष्यश्रीमत्कुलमण्डनसूरिविरचितावचूर्ण्यवसानगतस्य—

"श्रीदेवसुन्दरगुरोः प्रसादतोऽवगतजिनवचोऽंशलव' । कुलमण्डनगणिरलिखदवचूर्णिमेकाब्धिभुवनाब्दे ॥"

इत्येतस्य पद्यगतस्य विक्रमार्कीय १४४१ सवत्सरत पश्चात्कालभाविनीति श्रीमत्कुलमण्डनसूरिकृताया समग्राया अप्यवचूर्ण्या अस्या प्राय आदर्शरूपेण दर्शनात्प्रतीयते ।

एषाऽवचूर्णिर्मन्दमतिभव्यजनपरोपकृतये केनचिन्मुनिपुङ्गवेन प्रज्ञापनोपाङ्गतृहद्वृत्तिमनुसृत्य श्रीमत्कुलमण्डनसूरिकृतावचूर्णिरेव विस्तरवती विहिता । अस्माभिरपि सेव विशेषत उपकारिणीति मुद्रिता ।

एतयोर्मध्ये पञ्चनिर्ग्रन्थीप्रकरणसशोधनसमये पुस्तकत्रितयं समासादितम् । तत्र कस्मिंश्चित्संक्षेपत' कस्मिंश्चिद्विस्तरतोऽवचूर्णिर्लिखिता वर्त्तते, परमस्माभिर्विस्तरपाठ एवादृत । प्रज्ञापनोपाङ्गतृतीयपदसंग्रहण्या सशोधनावसरे तु पुस्तकचतुष्टय समुपलब्धम् । तत्राद्य 'संवत् १४५३ वर्षे वैशाखसुद. १३ भौमे' लिखित पञ्चपत्रात्मक शुद्धप्रायम् । द्वितीय पुन पञ्चपत्रात्मक शुद्धप्रायम् । तृतीय तु 'संवत्–१६६३ वर्षे भादरवावद. २ वाघमार जावउ भरथणी लिखतम्' लिखित त्रयोदशपत्रात्मकमशुद्धिबहुलम् । एतत्पुस्तकत्रयं पत्तनीयतपागच्छीयभाण्डागारसत्क श्रेष्ठिहालाभाइ–तनुज–लेहेरचन्द–द्वारा संप्राप्तम् । एते त्रयोऽप्यादर्शा' श्रीकुलमण्डनसूरिकृतावचूर्णिसत्का । चतुर्थं च 'सवत् १४९० वर्षे पोपशुदि १५ पुष्यार्के' लिखितं पट्पत्रात्मकं नातिशुद्ध पन्यासश्रीदानविजयमुनिद्वारा सप्राप्तम् । एतदेव विस्तरावचूर्णिवत् । एतत्पुस्तकाधारेण संशोधनकर्मणि साहाय्यमुपलभमान' पुस्तकप्रपेयितॄणा महाशयानामुपकार न विस्मराम' ।

एतत्प्रकरणद्वये पूर्वोक्तपुस्तकाधारेण संशोधितेऽपि यस्मिन् कस्मिंश्चित्स्थानेऽशुद्धिर्दृष्टिपथमवतरेत्तत्र संशोधयन्तु सदयहृदया' सहृदया इति प्रार्थ्यते—

संवत् १९७४ वर्षे कार्त्तिकशुक्लसप्तम्यां
प्रस्तावनेयं मोहमय्यामलेखि

प्रवर्त्तकश्रीमत्कान्तिविजयचरणचञ्चरीकः
चतुरविजयो मुनिः ।

इति शेषाः षडेव । निर्ग्रन्थो वेदनीयमेव बध्नाति, बन्धहेतुषु योगानामेव सद्भावात् । स्नातकः सातवेदनीयं बध्नाति बन्धेन रहितो वा, अयोग्यवस्थायां बन्धहेत्वभावात् ॥ ७५ ॥ ७६ ॥ द्वारमेकविंशम् २१ ॥

**वेयंति अट्ठ चउरो, निग्गंथो सत्त मोहवज्जाओ । ण्हाओ घाइविवज्जे, चउरो वेएइ कम्मंसे ॥७७॥दारं२२**

पुलाकबकुशप्रतिसेवाकषायकुशीला अष्टौ कर्मप्रकृतीर्वेदयन्ति । निर्ग्रन्थः सप्त प्रकृतीर्वेदयति, मोहनीयं न वेदयति, तस्योपशान्तत्वात् क्षीणत्वाद्वा । स्नातको घातिकर्मवर्जांश्चतुरः कर्मांशान् वेदयति ॥ ७७ ॥ द्वारं द्वाविंशम् २२ ॥

**वेयणिआउयवज्जा, पयडीओं उदीरए छ उ पुलाओ । बउसासेवी सत्तट्ठ छच्च सत्ताउवज्जाओ ॥ ७८ ॥**
**सकसाओ एआओ, पंच य वेयाउमोहवज्जाओ । एवं पंच नियंठो, दुन्नि य नामं च गुत्तं च ॥ ७९ ॥**
**ण्हाओ एवं दुन्नि उ, उदीरणावज्जिओ व सो होइ । दारं२३ । चइऊण पुलायत्तं, होइ कसाई अविरओ वा ॥**
**बउसत्तचुओ सेवी, कसायवं अविरओ व सड्ढो वा । सेवित्तचुओ बउसो, कसाइ सड्ढो अविरओ वा८१॥**
**सकसाओ पुण पुलओ, बउसो पडिसेवगो नियंठो वा । सड्ढो असंजओ वा, हविज्ज चइउं कसाइत्तं ॥८२॥**
**निग्गंथत्तचुओ पुण, सकसाइ सिणायगो अविरओ वा ।**
**ण्हाओ चइय सिणायत्तणं तु सिद्धो हविज्ज त्ति ॥ ८३ ॥ दारं २४ ॥**

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

नवाङ्गीवृत्तिकारश्रीमदभयदेवसूरिविरचितं सावचूरिकं

# पञ्चनिर्ग्रन्थीप्रकरणम् ।

पन्नवण १ वेय २ रागे ३, कप्प ४ चरित्त ५ पडिसेवणा ६ नाणे ७ ।
तित्थे ८ लिंग ९ सरीरे १०, खित्ते ११ काल १२ गइ १३ संजम १४ निगासे १५ ॥ १ ॥
जोगु १६ वओग १७ कसाए १८, लेसा १९ परिणाम २० बंधणे २१ वेए २२ ।
कम्मोदीरण २३ उवसंपजहण २४ सन्ना २५ य आहारे २६ ॥ २ ॥

१ "गइठिइ १३ संजम १४" इत्यपि पाठः ॥

'परित्त' इति परीताः प्रत्येकशरीरिणः शुक्लपाक्षिकाश्च तद् द्वारम् १९ । 'भवि' इति भवसिद्धिकद्वारम् २० । अस्ती-
ति अस्तिकायद्वारम् २१ । एतैर्दिग्विभागादि २७ द्वारैः पृथिव्यादीनामल्पबहुत्वादिनिरूपणाय द्वारसंग्रहगाथाद्वयम् ॥१॥२॥

**रुयगा पच्छिमपुव्वा दाहिणओ उत्तरेण जहसंखं । थोवा बहुआ बहुतर बहुतमगा हुंति जीवाओ ॥ ३ ॥**
**जत्थ वणं[2] तत्थ जिया बहुया तं पुण जलस्स निस्साए । ता जत्थ जलं थोवं तत्थ उ जीवा उ थोवयरा ॥४॥**
**पुव्वावरासु चंदिमरविदीवा अत्थि तेण जलमप्पं । गोयमदीवो अवराइ अत्थि तं तेण अप्पयरं ॥ ५ ॥**

तिर्यग्लोकमध्यगतादष्टप्रदेशाद् रुचकात् 'अट्ठपएसो रुयगो' । इदं ह्यल्पबहुत्वं बादरानधिकृत्य न सूक्ष्माँस्तेषां सर्वलो-
कापन्नत्वेन प्रायः सर्वत्रापि समत्वात् ॥ ३ ॥ जलेऽवश्यं पनकसेवालादीनां भावात् । ते च पनकादयो बादरनामकर्मो-
दयेऽपि अत्यन्तसूक्ष्मावगाहनत्वादतिप्रभूतपिण्डीभावाच्च सर्वत्र सन्तोऽपि न चक्षुषा ग्राह्याः ॥ ४ ॥ समुद्रेषु प्रत्येकं प्राची-
प्रतीचीदिशोर्यथाक्रमं चन्द्रसूर्यद्वीपाः । [3]लवणसमुद्राधिपसुस्थितदेवावासभूतो गोतमद्वीपः प्रतीच्यामधिकः ॥ ५ ॥

**चंदाइदीवविरहा उ दाहिणे होइ बहुतरं तोयं । तत्तो य उत्तरेणं माणससरसंभवा बहुयं ॥ ६ ॥**
**बारस य सहस्साइं वित्थरओ जोयणाण लवणजले । अत्थि हु गोयमदीवो उच्चो छावत्तरसहस्सं ॥७॥**

---

१ 'भव' इत्यपि । २ 'जलम्' इत्यपि । ३ इतः प्राक् 'यत्र द्वीपाः तत्रोदकाभावः, तस्याभावाद्वनस्पतेरभावः । केवलं' इत्यधिकं क्वचित् ।

**भव २७ आगरिसे २८ कालं २९ तरे ३० य समुघाय ३१ खित्त ३२ फुसणा ३३ य ।**
**भावे ३४ परिमाणं ३५ खलु, अप्पाबहुयं ३६ नियंठाणं ॥ ३ ॥**

'पन्नवण' इति (इत्यादि) द्वारगाथात्रयम् । प्रज्ञापना-प्रकर्षेण संशीत्यपनोदेन स्वरूपसङ्ख्याभेदादिप्रकारेण ज्ञापना १। वेदः स्त्री-पुं-नपुंसकभेदात्रेधा २। रागः कामराग-स्नेहराग-दृष्टिरागभेदात्त्रिविधोऽप्यत्र भेदाविवक्षयैक एव गृहीतः ३। कल्पः स्थविरकल्प-जिनकल्परूपो द्विधा, शेषाः परिहारविशुद्धिक-प्रतिमा-यथालन्दककल्पास्त्वेतयोरेवान्तर्भाविताः ४ । चारित्रं सामायिक-च्छेदोपस्थापनीय-परिहारविशुद्धिक-सूक्ष्मसंपराय-यथाख्यातभेदात्पञ्चधा ५ । प्रातिकूल्येन सेवना प्रतिसेवना-विराधनेत्यर्थः। सा च मूलगुणोत्तरगुणविषया दशधा । सहसाकार-अनाभोग-आतुरत्व-आपत्-शङ्का-प्रद्वेष-विमर्श-भय-दर्प-प्रमादभेदाद् दर्प-अकल्प-निरालम्बनत्व-प्रीतिकरत्व-अप्रशस्तत्व-विश्वस्तत्व-अप्रतीप्सित-अकृतयोगित्व-निरुंपतापित्व-निःशङ्कत्वभेदाद्वा दशधा ६। ज्ञानं मति-श्रुत-अवधि-मनःपर्याय-केवलभेदात्पञ्चधा ७। तीर्थं तीर्थकरप्रवर्त्तितम् ८। लिङ्गं स्व-अन्य-गृहिलिङ्गभेदात्रेधा ९। शरीरं औदारिक-वैक्रिय-आहारक-तैजस-कार्मणभेदात्पञ्चधा १०। क्षेत्रं कर्मभूमि-अकर्मभूमिरूपं द्विधा ११। काल उत्सर्पिणी-अवसर्पिणी-तदुभयव्यतिरिक्तरूपस्त्रिधा १२। गतिर्देवगत्यादिः। स्थितिः पुलाकादीनां तत्रैव पल्योपमपृथक्त्वादिः १३। संयमः संयमस्थानान्यसङ्ख्यातानि १४। निकर्षः संनिकर्षः, पञ्चानामपि निर्ग्रन्थानां स्वस्थानपरस्थानापेक्षया हीनाधिक-

१ "निरनुतापित्व-" इत्यपि ।

केभ्यस्तिर्यक्सम्मिश्रा एव तेजोलेश्याकाश्चिन्त्यन्ते ते तिर्यञ्चश्च पद्मलेश्या अप्यतिबहवस्ततः सङ्ख्येयगुणा एव लभ्यन्ते नासंख्येयगुणा इति । तेभ्योऽलेश्याका अनन्तगुणाः, सिद्धानामनन्तत्वात् । तेभ्यः कापोतलेश्या अनन्तगुणाः, वनस्पतिकायिकानामपि कापोतलेश्यायाः संभवात्, वनस्पतिकायानां च सिद्धेभ्योऽप्यनन्तत्वात् । तेभ्योऽपि नीललेश्या विशेषाधिकाः, प्रभूततराणां नीललेश्यासंभवात् । तेभ्योऽपि कृष्णलेश्याका विशेषाधिकाः प्रभूततमानां कृष्णलेश्याकत्वात् । तेभ्यः सामान्यतः सलेश्या विशेषाधिकाः, नीललेश्यादीनामपि तत्र प्रक्षेपात् ॥ ६४–७० ॥ द्वारम् ८ ॥

**सम्मामिच्छद्दिट्ठीहिंतो सम्मत्तिणो अणंतगुणा । तत्तो मिच्छद्दिट्ठी अणंतगुणिया मुणेयव्वा ॥ ७१ ॥ ९ ।**

सर्वस्तोकाः सम्यग्मिथ्यादृष्टयः, सम्यग्मिथ्यादृष्टिपरिणामकालस्यान्तर्मुहूर्त्तप्रमाणत्वादतिस्तोकत्वेन तेषां पृच्छासमये स्तोकानामेव तत्र लभ्यमानत्वात् । तेभ्यः सम्यग्दृष्टयोऽनन्तगुणाः, सिद्धानामनन्तत्वात् । तेभ्योऽपि मिथ्यादृष्टयोऽनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तत्वात् तेषां च मिथ्यादृष्टित्वात् ॥ ७१ ॥ द्वारम् ९ ॥

**मणनाणीणं ओहिन्नाणि असंखा तओ मइ सुया उ । तुल्ला उ विसेसहिया विभंगनाणी असंखगुणा ॥७२॥**
**तेहिंतो केवलिणो अणंतगुणिया उ हुंति तेहिंतो । हुंति अणंता दो वि हु मइसुअन्नाणिणो तुल्ला ॥७३॥१०।**

सर्वस्तोका मनःपर्यवज्ञानिनः, संयतानामेवामर्षौषध्यादिऋद्धिप्राप्तानां मनःपर्यवज्ञानसम्भवात् । तेभ्योऽसङ्ख्येयगुणा अवधिज्ञानिनः, नैरयिकतिर्यक्पञ्चेन्द्रियमनुष्याणामेवावधिज्ञानविकलानामपि सम्भवात् । तेभ्यो मतिश्रुतज्ञानिनो विशेषा-

१ "० मनुष्यदेवानामपि तत्सम्भवात् " इति प्रज्ञापनावृत्तिपाठः ।

त्वतुल्यत्वविचारः १५। योगो मनोयोगादिः। उत्तरभेदापेक्षया पञ्चदशविधोऽपि मूलभेदापेक्षया त्रिविधः १६। उपयोगो द्वादशभेदोऽपि साकार–अनाकारतया द्विधा १७। कषायाः संज्वलनरूपाश्चत्वारः, शेषेषु निर्ग्रन्थत्वाभावात्[1] १८। लेश्याः षट् प्रसिद्धाः १९। परिणामो वर्द्धमान–हीयमान–अवस्थितरूपस्त्रिधा २०। कर्मबन्धः कस्य कियत्प्रकृतीनां बन्धः? इत्येवम् २१। एवं वेदनोदीरणे अपि भाव्ये २२–२३। 'उवसंपजहण' इति उपसंपच्चारित्रस्य[2] प्राप्तिः, हानमपि तस्यैव, 'उपसंपद्धानं' पुलाकत्वं मुक्त्वा कषायकुशीलादित्वं प्रतिपद्यत इत्यादि २४। संज्ञा आहार–भय–परिग्रह–मैथुन–क्रोध–मान–माया–लोभ–लोक–ओघसंज्ञाभेदाद्दशधा २५। आहारः प्रसिद्धः २६। भवः कस्य कियन्तो भवाः? इत्येवम् २७। आकर्षाः पुलाकत्वादिग्रहणपरिणामाः २८। कालः कियत्कालं पुलाकादित्वं स्यात्? इति २९। अन्तरं पुलाकः पुलाकत्वं विहाय पुनः कियताऽन्तरेण पुलाकः स्यात्? इत्यादि ३०। समुद्घाता वेदना–कषाय–मरण–वैक्रिय–आहारक–तैजस–केवलिसमुद्घातरूपाः सप्त ३१। क्षेत्रं क्षेत्रावगाहना ३२। स्पर्शना क्षेत्रस्पर्शना ३३। भावः क्षायोपशमिक–औपशमिक–क्षायिकरूपस्त्रेधा[3] ३४। परिमाणं सङ्ख्या ३५। अल्पबहुत्वं मिथो न्यूनाधिकभावः ३६। एवं ३६ द्वाराणि निर्ग्रन्थानां वाच्यानि ॥ १ ॥ २ ॥ ३ ॥

इह पञ्चापि निर्ग्रन्था ज्ञानदर्शनचारित्रपरिणामे कियत्यपि यथायोगं सत्येव निर्ग्रन्थव्यपदेशं लभन्ते, ज्ञानादिपरिणा-

---

१ प्रदेशोदयाद्यपेक्षया शेषेष्वपीत्याशयः श्रीशान्तिसूरीणाम्। २ सङ्गो असंजओ वेति वक्ष्यमाणवचनादुपलक्षणम्। ३ औदयिकपारिणामिकयोः जीवस्वरूपत्वात् मोक्षमार्गत्वाभावात् अप्राशस्त्याच्च न ग्रहणम् सान्निपातिकस्य तु संयोगरूपत्वान्न ग्रहणम् ॥

सर्वस्तोकाः संयताः, उत्कृष्टपदेऽपि तेषां कोटिसहस्रपृथक्त्वप्रमाणतया लभ्यमानत्वात् । तेभ्यः संयतासंयता देशविरता असङ्ख्येयगुणाः, तिर्यक्पञ्चेन्द्रियाणामसङ्ख्यातानां देशविरतिसद्भावात् । तेभ्यो नोसंयता नोअसंयता नोसंयतासंयता अनन्तगुणाः, प्रतिषेधत्रयवृत्ता हि सिद्धास्ते चानन्ता इति । तेभ्योऽसंयता अनन्तगुणाः, वनस्पतीनां सिद्धेभ्योऽप्यनन्तत्वात् ॥ ७५ ॥ द्वारम् १२ ।

अणगारुवउत्ताणं सागारुवओगिणो उ संखगुणा ।
दंसणवओगकालो थोवो जं इयर इयरु त्ति ॥ ७६ ॥ दारं १३ ।

अनाकारोपयुक्तेभ्यः साकारोपयुक्ताः सङ्ख्येयगुणाः, यतोऽनाकारोपयोगकालः सर्वस्तोकोऽतस्ते पृच्छासमये स्तोका एव प्राप्यन्ते । इतरः साकारोपयोगकाल इतरो दीर्घ इति पृच्छासमये साकारोपयोगिनो बहवः प्राप्यन्तेऽतस्ते सङ्ख्यातगुणाः ॥ ७६ ॥ द्वारम् १३ ।

थोवा णाहारजिया तत्तो आहारगा असंखगुणा । विग्गहगइणो जम्हा णाहारा तेण ते थोवा ॥७७॥
अंतोमुहुत्तसमयप्पमाणया विग्गहम्मि वट्टंति । सुहुमनिगोआ उ जिया तेहिं हीणा उ सेसजिया ॥७८॥
ते विग्गही निगोआ णाहारा पढम[1]विग्गहं मुत्तं ।

---

१ यत एकवक्राया गतौ समयद्वयेऽप्याहारक एव । आद्यसमये प्राग्भवस्याहारः । द्वितीयसमये परभवस्य । अतः प्रथमविग्रहं मुक्त्वेत्युक्तम् ।

द्रव्यक्षेत्रकालभावविशेषसम्बन्धवशादनन्ता भाविनोऽद्धासमयास्तथाऽतीता अपीति सिद्धः पुद्गलास्तिकायादनन्तगुणोऽद्धासमयो द्रव्यार्थतयेति । इह कालमाश्रित्य प्रदेशार्थतयाऽल्पबहुत्वविचारणा न कृता, कालप्रदेशानामभावात् । आह— कोऽयमद्धासमयानां द्रव्यार्थतानियमः ? यावता प्रदेशार्थतापि तेषां विद्यत एव । तथाहि— यथाऽनन्तानां परमाणूनां समुदायः स्कन्धो भण्यते । स च द्रव्यं तदवयवाश्च प्रदेशाः । तथेहापि सकलः कालो द्रव्यं तदवयवाश्च समयाः प्रदेशा इति । तदयुक्तम्, दृष्टान्तदार्ष्टान्तिकवैषम्यात् । परमाणूनां समुदायस्तदा स्कन्धो भवति यदा ते परस्परसापेक्षतया परिणमन्ते । परस्परनिरपेक्षाणां केवलपरमाणूनामिव स्कन्धत्वायोगात् । अद्धासमयास्तु परस्परनिरपेक्षा एव, वर्त्तमानसमयभावे पूर्वापरसमययोरभावात् । ततो न स्कन्धत्वपरिणामः, तदभावाच्च नाद्धासमयाः प्रदेशाः, किन्तु पृथग् द्रव्याण्येवेति १० । तस्मादप्यद्धासमयादाकाशास्तिकायः प्रदेशार्थतयाऽनन्तगुणः, सर्वास्वपि दिक्षु विदिक्षु च तस्यान्ताभावात्, अद्धासमयस्य च मनुष्यक्षेत्रमात्रभावात् ॥ ११ ॥ ८५ ॥ ८६ ॥ द्वारम् २१ ॥

चरिमाउ अचरिमाणं णंतगुणा हुंति सिद्धसमा ॥ ८७ ॥

इह अचरिमा अभवा चरिमा पुण भावि चरमभवगहणा ।
ते सिद्धसमा तुल्ला जमईयाणागयद्धा य ॥ ८८ ॥ दारं २२ ।

येषां चरमो भवः संभवी योग्यतयापि ते चरमा उच्यन्ते ते चार्थाद्भव्याः । इतरेऽचरमा अभव्या सिद्धाश्च । उभयेषामपि चरमभवाभावात् । तत्र सर्वस्तोका अचरमाः, अभव्यानां सिद्धानां च समुदितानामप्यजघन्योत्कृष्टयुक्तानन्तकपरि-

पुलाकं इव पुलाकः संयमसारापेक्षया । स च संयमवानपि मनाक् तमसारं कुर्वन् पुलाक उच्यते १ । वकुशः—वकुशं शवलं कर्बुरं वकुशसंयमयोगाद् वकुशः २ । कुशीलः—कुत्सितं शीलं—चरणं यस्येति कुशीलः ३ । निर्ग्रन्थः—निर्गतो ग्रन्थात्—मोहनीयकर्माख्यादिति निर्ग्रन्थः ४ । स्नातकः—स्नात इव घातिकर्ममलक्षालनात् ५ । एकैकोऽसौ द्विधा भवेत् ॥ ४ ॥

गंथो मिच्छत्तधणाइओ मओ जे य निग्गया तत्तो । ते निग्गंथा वुत्ता, तेसि पुलाओ भवे पढमो ॥ ५ ॥
धन्नमसारं भन्नइ, पुलायसद्देण तेण जस्स समं । चरणं सो उ पुलाओ, लद्धीसेवाहिँ सो य दुहा ॥ ६ ॥
संघाइयाण कज्जे, चुन्निज्जा चक्कवट्टिमवि जीए । तीए लद्धीइ जुओ, लद्धिपुलाओ मुणेयव्वो ॥ ७ ॥
आसेवणापुलाओ, पंचविहो नाणदंसणचरित्ते । लिंगंमि अहासुहुमे, य होइ आसेवणानिरओ ॥ ८ ॥
नाणे दंसणचरणे, ईसीसि विराहयं असारो जो । सो नाणाइपुलाओ, भन्नइ नाणाइ जं सारो ॥ ९ ॥
खलियाइदूसणेहिं, नाणं संकाइएहिँ सम्मत्तं । मूलुत्तरगुणपडिसेवणाइ चरणं विराहेइ ॥ १० ॥
लिंगपुलाओ अन्नं, निक्कारणओ करेइ जो लिंगं । मणसा अकप्पियाणं, निसेवओ होअहासुहुमो ॥११॥

ग्रन्थो मिथ्यात्वधनादिको मतः । मिथ्यात्वादिकः—मिथ्यात्व १ कषाय ४ नोकषाय ९ एवं चतुर्दशात्मकः, धनादिकः—

---

१ "—कवत् पुला—" इत्यपि । "सो दुविहो" इत्यपि ।

नपि लोकान् स्पृशन्ति ते परिग्राह्याः । ते च तिर्यग्लोकवर्त्तिभ्योऽसङ्ख्येयगुणा एव । कथम् ?, इह बहवः प्रतिसमयमूर्द्ध-
लोकेऽधोलोके च सूक्ष्मनिगोदा उद्वर्त्तन्ते । ये तु तिर्यग्लोकवर्त्तिनः सूक्ष्मनिगोदा उद्वर्त्तन्ते तेऽधोलोके ऊर्द्ध्वलोके वा
केचित्तस्मिन्नेव वा तिर्यग्लोके समुत्पद्यन्ते ततो न ते लोकत्रयसंस्पर्शिनः । तत्रोर्द्ध्वलोकाधोलोकगतानां सूक्ष्मनिगोदाना-
मुद्वर्त्तमानानां मध्ये केचित्स्वस्थान एवोर्द्ध्वलोकेऽधोलोके वा समुत्पद्यन्ते, केचित्तिर्यग्लोकेऽधोलोके वा । तेभ्योऽसङ्ख्येयगुणा
अधोलोकगता ऊर्द्ध्वलोके ऊर्द्ध्वलोकगता अधोलोके वा समुत्पद्यन्ते, ते च तथोत्पद्यमाना स्त्रीनपि लोकान् स्पृशन्तीत्यस-
ङ्ख्येयगुणाः । कथं पुनरेतदेवमवसीयते ? यदुत एवंप्रमाणा बहवो जीवाः सदा विग्रहगत्यापन्ना लभ्यन्ते, इति चेदुच्यते
युक्तिवशात्, तथाहि—प्रागुक्तं प्रज्ञापनायामेव पर्याप्तद्वारे—"सव्वत्थोवा जीवा नोपज्जत्ता नोअपज्जत्ता सिद्धा, अपज्जत्ता
अणंतगुणा, पज्जत्ता संखिज्जगुणा" इति । तत एवं नामाऽपर्याप्ता बहवो येनैतेभ्यः पर्याप्ताः सङ्ख्येयगुणा एव नासङ्ख्येयगुणा
नाप्यनन्तगुणाः । ते चापर्याप्ता बहवोऽन्तरगतौ वर्त्तमाना लभ्यन्ते ४ इति । तेभ्य ऊर्द्ध्वलोके ऊर्द्ध्वलोकावस्थिता अस-
ङ्ख्येयगुणाः, उपपातक्षेत्रस्यातिबहुत्वादसङ्ख्येयानां च भागानामुद्वर्त्तनायाः सम्भवात् ५ । तेभ्योऽधोलोकेऽधोलोकस्था
विशेषाधिकाः, ऊर्द्ध्वलोकक्षेत्रादधोलोकक्षेत्रस्य विशेषाधिकत्वात् ६ ॥ ९७ ॥ तदेवं सामान्यतो जीवानां क्षेत्रानुपातेनाल्प-
बहुत्वमुक्तं, अथ चतुर्गतिदण्डक्रमेण तदाह—

**भणियाण लोगभेयाण नारया चउत्थबीयछट्ठेसु । थोवा दोसु असंखा तिरिया जह ओहिया जीवा ॥९८॥**

पूर्वोक्तानां षण्णां लोकभेदानां मध्ये चतुर्थद्वितीयषष्ठेषु लोकेषु जीवा यथासङ्ख्यं स्तोका असङ्ख्यातगुणाश्च । तत्र कथं

धन १ धान्य २ हिरण्य ३ सुवर्ण ४ क्षेत्र ५ वास्तु ६ कुप्य ७ द्विपद ८ चतुष्पद ९ रूपः, ये च ततो निर्गतास्ते निर्ग्र-
न्था उक्ताः । 'तेषां' निर्ग्रन्थानां पुलाकः प्रथमः ॥ ५ ॥ पुलाकशब्देनासारं धान्यं भण्यते । तेन धान्येन यस्य चरणं
समं स्यात् स पुलाकः । स च द्विधा—लब्धिपुलाकः प्रतिसेवनापुलाकश्च । लब्धिपुलाको लब्धिविशेषवान् तस्य देवे-
न्द्रसदृशा ऋद्धिः स्यात् । प्रतिसेवनापुलाको ज्ञानादीनां मनाग् विराधकः ॥ ६ ॥ सङ्घादिकानां कार्ये उत्पन्ने चक्रवर्त्ति-
नमपि यया लब्ध्या चूर्णयति तया लब्ध्या युतो लब्धिपुलाको ज्ञातव्यः ॥ ७ ॥ आसेवनापुलाकः पञ्चधा—ज्ञानदर्शन—
चारित्रे लिङ्गे चासेवनानिरतः, यथासूक्ष्मश्च (क्ष्मे च) ॥ ८ ॥ ज्ञानदर्शनचरणेष्वीषदीपद्विराधयन् योऽसारोऽसौ
ज्ञानादिपुलाको भण्यते, यद् ज्ञानादि सारं संयमे ॥ ९ ॥ स्खलितमिलितादिदूषणैर्ज्ञानं शङ्कादिभिः सम्यक्त्वं मूलोत्त-
रगुणप्रतिसेवनया चरणं विराधयति ॥ १० ॥ लिङ्गपुलाको योऽन्यल्लिङ्गं करोति, 'निष्कारणतः' हेत्वभावतः, अकल्प्यानां
वस्तूनां मनसा निषेवको यः स यथासूक्ष्मो भवति ॥ ११ ॥

**बउसं सबलं कब्बुरमेगट्ठं तमिह जस्स चारित्तं । अइयारपंकभावा, सो बउसो होइ निग्गंथो ॥ १२ ॥**

वकुशं शबलं कर्बुरमिति 'एकार्थं' एकाभिधेयं तदिति तादृशं यस्य चारित्रमतिचारपङ्कसद्भावात् । स वकुशो
भवति निर्ग्रन्थः ॥ १२ ॥

**उवगरणसरीरेसुं, स दुहा दुविहोऽवि होइ पंचविहो । आभोगअणाभोगे, अस्संवुडसंवुडे सुहुमे ॥ १३ ॥**

१ "स्यात्" इत्यपि पाठः । २ "सूक्ष्म इत्युच्यते" इत्यपि पाठः ।

यगुणत्वात् स्वस्थानत्वाच्च ६ ॥ १०० ॥

**चउथे१पढमे२बीए३पंचम४छट्ठे५तइज्जए६नारी । थोवा१संखिज्जगुणा६कमेण सेसेसु ठाणेसु ॥ १०१ ॥**

मानुष्यश्चतुर्थे त्रिलोके स्तोकाः, यतो मनुष्यवत्समुद्घातत्रयगत्या त्रिलोकं स्पृशन्ति । आसां चाहारकसमुद्घातो न भवतीति १ । ताभ्यः प्रथमे ऊर्द्ध्वलोकतिर्यग्लोके सङ्ख्येयगुणाः, वैमानिकदेवानां शेषकायानां चोर्द्ध्वलोकात्तिर्यग्लोके मानुषीत्वेनोत्पद्यमानानां तथा तिर्यग्लोकगतमनुष्यस्त्रीणामूर्द्ध्वलोके समुत्पित्सूनां मारणान्तिकसमुद्घातेन दूरतरमूर्द्ध्वं विक्षिप्तात्मप्रदेशानामद्यापि कालमकुर्वतीनां यथोक्तप्रतरद्वयस्पर्शनभावात् तासां चोभयासामपि बहुतरत्वात् २ । द्वितीयादिलोकभेदचतुष्टये मनुष्यवद्भावना कार्या, मानुषीणां संमूर्छिमत्वाभावान्नासङ्ख्यातत्वम् ॥ १०१ ॥

**पंचम १ पढम २ चउत्थे ३ दुय ४ छट्ठे ५ तइए ६ वि सुरदेवी ।**
**थोव १ असंखा २ संखा ३ अस्संखा ४ दोसु संखगुणा ६ ॥ १०२ ॥ दारं २४ ।**

पञ्चम ऊर्द्ध्वलोके सामान्यतो देवाः स्तोकाः, वैमानिकदेवानामेव तत्र भावात् तेषां चाल्पत्वात् । येऽपि भवनपतिप्रभृतयो जिनेन्द्रजन्ममहादौ मन्दरादिषु गच्छन्ति तेऽपि स्वल्पा एवेति सर्वस्तोकाः १ । तेभ्यः प्रथमे ऊर्ध्वलोकतिर्यग्लोकेऽसङ्ख्येयगुणाः, तद्धि ज्योतिष्काणां प्रत्यासन्नमिति स्वस्थानम्, तथा भवनपतिव्यन्तरज्योतिष्काणां मन्दरादौ सौधर्मादिकल्पगताः स्वस्थाने गमनागमनेन, तथा ये सौधर्मादिषु देवत्वेनोत्पित्सवो देवायुः प्रतिसंवेदयमानाः स्वोत्पत्तिदेशमभिगच्छन्ति ते यथोक्तं प्रतरद्वयं स्पृशन्ति, ततः सामस्त्येन यथोक्तप्रतरद्वयस्पर्शिनोऽतिबहव इति पूर्वेभ्योऽसङ्ख्येयगुणाः २ ।

जो उवगरणे बउसो, सो धुवइ अपाउसेऽवि वत्थाइं। इच्छइ य लण्हयाइं, किंचि विभूसाइ भुंजइ य ॥१४॥
तह पत्तदंडयाई, घट्ठं मट्ठं सिणेहकयतेयं। धारेइ विभूसाए, बहुं च पत्थेइ उवगरणं ॥ १५ ॥
देहबउसो अकज्जे, करचरणनहाइयं विभूसेइ। दुविहोऽवि इमो इड्ढिं, इच्छइ परिवारपभिईयं ॥ १६ ॥

स वकुशः उपकरण—शरीरभेदाद्द्वेधा । तत्र वस्त्रपात्राद्युपकरणविभूषानुवर्त्तनशीलः उपकरणवकुशः। करचरणनखमुखादिदेहावयवविभूषानुवर्त्तनशीलः शरीरवकुशः। स द्विविधोऽपि पञ्चधा, तद्यथा—साधूनामकृत्यमेतदिति जानन् कुर्वन्नाभोगवकुशः १। अजानन् कुर्वन्ननाभोगवकुशः २। मूलगुणैरुत्तरगुणैश्च संवृतः कुर्वन् संवृतवकुशः ३। असंवृतः कुर्वन्नसंवृतवकुशः ४। नेत्रनासिकामुखादिमलापनयनं कुर्वन् सूक्ष्मो भवति ५ ॥ १३ ॥ उपकरणे यो वकुशो भवति सोऽप्रावृष्यपि वस्त्राणि धावयति, इच्छति च 'श्लक्ष्णानि' सूक्ष्माणि वस्त्राणि किञ्चिद् 'विभूषायै' विभूषार्थं समुपभुङ्क्ते च ॥ १४ ॥ तथा पात्रदण्डकादि घृष्टं खरपाषाणादिना, मृष्टं श्लक्ष्णपाषाणादिना सुकुमालं कृतं, तथा स्नेहादिना कृततेजस्कं धारयति 'विभूषायै' विभूषार्थं, बहु च प्रार्थयते[1] उपकरणं ॥ १५ ॥ देहवकुशः 'अकार्ये' कार्याभावेऽशुचिनेत्रविकारादि विना करचरणनखादिकं विभूषयति। उपकरणशरीरवकुशो द्विविधोऽप्ययं परिवारप्रभृतिकामृद्धिं इच्छति ॥ १६ ॥

पंडिच्चतवाइकयं, जसं च पत्थेइ तम्मि तुसइ य। सुहसीलो न य बाढं, जयइ अहोरत्त किरियासु ॥ १७॥

---

१ "प्रार्थयते" इत्यपि पाठः ॥

न भवति, ततस्तदभावाद्बहूनां निष्पत्तिः स्तोकानामेव चानिष्पत्तिरिति ३ । तेभ्यः समवहताः सङ्ख्येयगुणाः, बहूनां पर्याप्तेष्वपर्याप्तेषु च मारणान्तिकसमुद्घातेन समवहतानां लभ्यमानत्वात् ४ । तेभ्यः सातवेदकाः सङ्ख्येयगुणाः, आयुर्बन्धकापर्याप्तसुप्तेष्वपि सातवेदकानामपि लभ्यमानत्वात् ५ । तेभ्य इन्द्रियोपयुक्ताः सङ्ख्येयगुणाः, असातवेदकेष्वपीन्द्रियोपयोगस्य भावात् । तेभ्योऽनाकारोपयोगोपयुक्ताः सङ्ख्येयगुणाः, इन्द्रियोपयोगेषु नोइन्द्रियोपयोगेषु चानाकारोपयोगस्य लभ्यमानत्वात् ७ ॥ १०३ ॥

**एएसिं पडिवक्खा पडिलोमं पढम इत्थ संखगुणा। सेसा छावि कमेणं विसेसअहिया मुणेयव्वा ॥ १०४ ॥**

**अप्पज्जत्ता सव्वे सुत्ता पज्जत्तयावि किल केवि। जेसिमईया समया संखिज्जा जागरा सेसा ॥१०५॥ द्वारम् २५॥**

एतेषां सप्तानां प्रतिपक्षाः प्रतिलोमगत्या वाच्याः । तथाहि—अनाकारोपयोगयुक्तेभ्यः साकारोपयुक्ताः सङ्ख्येयगुणाः, इन्द्रियनोइन्द्रियोपयोगेषु साकारोपयोगकालस्य बहुत्वात् ७ । नोइन्द्रियोपयुक्ता विशेषाधिकाः, नोइन्द्रियानाकारोपयुक्तानामपि तत्र प्रक्षेपात् । इन्द्रियोपयोगो हि प्रत्युत्पन्नकालविषयः । यदात्विन्द्रियदृष्टमेवार्थं विचारयत्योघसंज्ञयापि तदा नोइन्द्रियोपयुक्तः स व्यपदिश्यते । ततो नोइन्द्रियोपयोगकालस्यातीतानागतकालविषयतया बहुकालत्वाद्विशेषाधिकत्वम् ६ । असातवेदका विशेषाधिकाः, इन्द्रियोपयुक्तेष्वप्यसातवेदकानां भावात् ५ । असमवहता विशेषाधिकाः, सातवेदकेष्वपि तद्भावात् ४ । जागरा विशेषाधिकाः, समवहतानामपि केषाञ्चिज्जागरत्वात् ३ । पर्याप्ता विशेषाधिकाः, सुप्तानामपि केषाञ्चित्पर्याप्तत्वात् । सुप्ता हि पर्याप्ता अपर्याप्ता अपि भवन्ति, जागरास्तु पर्याप्ता एवेति नियमः २ । आयुष्कर्माबन्धका

सङ्ख्येयगुणं त्रिगुणत्वात् । शेषाणि तु नोइन्द्रियोपयुक्तादीनि प्रतिलोमं विशेषाधिकानि द्विगुणत्वस्यापि क्वचिदभावात् ॥

**चउथे १ पढम २ दु ३ तइए ४ पंचम ५ छट्ठेसु पुग्गला कमसो ।**
**थोवा १ ऽणंता २ अहिया दोसु असंखा ५ विसेसहिया ६ ॥ १०६ ॥**

इह पुद्गलाः पुद्गलद्रव्यस्कन्धा ग्राह्यास्ते च चतुर्थे त्रैलोक्यस्पर्शिनः स्तोकाः, यस्मान्महास्कन्धा एव त्रैलोक्यव्यापिनस्ते चाल्पा इति १ । तेभ्यः प्रथमे ऊर्ध्वलोकतिर्यग्लोकेऽनन्तगुणाः, यतस्तेऽनन्ताः सङ्ख्येयप्रदेशका अनन्ता असङ्ख्येयप्रदेशका अनन्ता अनन्तप्रदेशकाः स्कन्धाः स्पृशन्तीति द्रव्यार्थतयानन्तागुणा इति २ । तेभ्यो द्वितीयेऽधोलोके विशेषाधिकाः, क्षेत्रस्यायामविष्कम्भाभ्यां मनाग्विशेषाधिकत्वात् ३ । तेभ्यस्तृतीये तिर्यग्लोकेऽसङ्ख्येयगुणाः, क्षेत्रस्यासङ्ख्येयगुणत्वात् ४ । तेभ्यः पञ्चमे ऊर्ध्वलोकेऽसङ्ख्येयगुणाः, क्षेत्रस्यासङ्ख्येयगुणत्वात् ५ । तेभ्यः षष्ठेऽधोलोके विशेषाधिकाः, ऊर्ध्वलोकादधोलोकस्य विशेषाधिकत्वात् । देशोनसप्तरज्जुप्रमाणो ह्यूर्ध्वलोकः समधिकसप्तरज्जुप्रमाणस्त्वधोलोकः ६ ॥ १०६ ॥

**थोवुड्ढे अहियाहे तुल्ला ईसाण निरिइय असंखा । वायवग्गिसु तुल्ला अहिआ पुवाइ अस्संखा ॥ १०७ ॥**
**अवरेण दाहिणेणं उत्तरओ पुग्गला कमेणाहिया । खित्ताइविसेसेणं बहुअत्तं वित्तिओ नेयं ॥ १०८ ॥**

पुद्गलाः स्तोका ऊर्ध्वदिशि, इह रत्नप्रभासमभूतलमेरुमध्येऽष्टप्रादेशिको रुचकस्तस्मान्निर्गता चतुःप्रादेशिकी ऊर्ध्वा दिग्यावल्लोकान्तस्ततः सर्वस्तोकाः पुद्गलाः १ । तेभ्योऽधोदिशि विशेषाधिकाः, अधोदिगपि रुचकादेव प्रभवति चतुःप्रदेशा

यनयन् यथासूक्ष्मबकुशः ॥

सीलं चरणं तं जस्स कुच्छियं सो इह कुसीलो ॥ २२ ॥

पडिसेवणा कसाए, दुहा कुसीलो दुहावि पंचविहो। नाणे दंसण चरणे, तवे य अहसुहुमए चेव ॥ २३ ॥

इह नाणाइकुसीलो, उवजीवं होइ नाणपभिईए। अहसुहुमो पुण तस्सं, एस तवस्सि त्ति संसाए॥ २४ ॥

जो नाणदंसणतवे, अणुजुंजइ कोहमाणमायाहिं। सो नाणाइकुसीलो, कसायओ होइ नायव्वो ॥ २५ ॥

चारित्तंमि कुसीलो, कसायओ जो पयच्छइ सावं। मणसा कोहाईए, निसेवयं होअहासुहुमो ॥ २६ ॥

शीलं चरणं तद्यस्य कुत्सितं स इह कुशीलः ॥ २२ ॥ स कुशीलो विपरीताऽऽराधना प्रतिसेवना तया कुशीलः प्रतिसेवनाकुशीलः १। कषायैः संज्वलनोदयादिरूपैः कुशीलः कषायकुशीलः २। द्विधापि पञ्चधा—ज्ञान–दर्शन–चारित्र–तपोविषयो यथासूक्ष्मश्च ॥ २३ ॥ इह ज्ञानादिकुशीलो ज्ञानदर्शनचारित्रतपांस्युपजीवंस्तत्तत्प्रतिसेवनाकुशीलः । एष तु तपस्वीत्यादि प्रशंसया यस्तुष्यति स यथासूक्ष्मः प्रतिसेवनाकुशीलः ॥ २४ ॥ तथा ज्ञानदर्शनतपांसि यः संज्वलनकषायोदययुक्तः स्वस्वविषये व्यापारयति स तत्तत्कषायकुशीलो ज्ञातव्यः ॥ २५ ॥ चारित्रकुशीलः स यः कषायाविष्टः शापं प्रयच्छति। मनसा क्रोधादीन्निषेवन् यथासूक्ष्मकषायकुशीलः ॥ २६ ॥

अहवाऽवि कसाएहिं, नाणाईणं विराहओ जो य। सो नाणाइकुसीलो, नेओ वक्खाणभेएण ॥ २७ ॥

**एगपएसट्ठिय १ संखट्ठ २ पएसा ३ असंखठिय ४ अंसा ५ ।**
**थोवा १ दो संखा ३ दो अस्संखा ५ कालओ चेव ॥ ११० ॥**

इह क्षेत्राधिकारतः क्षेत्रप्राधान्यात्परमाणुकाद्यनन्ताणुकस्कन्धा अपि विवक्षितैकप्रदेशावगाढा आधाराधेययोरभेदोपचारादेकद्रव्यत्वेन व्यवह्रियन्ते, ते इत्थंभूता एकप्रदेशावगाढाः पुद्गलाः सर्वस्तोकाः, लोकाकाशप्रदेशप्रमाणा इत्यर्थः । नहि स कश्चिदेवंभूत आकाशप्रदेशोऽस्ति य एकप्रदेशावगाहनपरिणामपरिणतानां परमाण्वादीनामवकाशदानपरिणामेन परिणतो न वर्तते इति । तेभ्यः सङ्ख्येयप्रदेशावगाढाः पुद्गला द्रव्यार्थतया सङ्ख्येयगुणाः, कथम्? इहापि क्षेत्रप्राधान्याद् द्व्यणुकाद्यनन्ताणुकस्कन्धा द्विप्रदेशावगाढा एकद्रव्यत्वेन विवक्ष्यन्ते । इह सर्वलोकप्रदेशास्तत्त्वतोऽसङ्ख्येया अपि कल्पनया दश कल्प्यन्ते । ते च प्रत्येकचिन्तायां दशैवेति दश एकप्रदेशावगाढानि द्रव्याणि । तेष्वेव दशसु प्रदेशेष्वन्यग्रहणान्यमोक्षणद्वारेण बहवो द्विकसंयोगा लभ्यन्त इत्येकप्रदेशावगाढेभ्यो द्विप्रदेशावगाढानि द्रव्याणि सङ्ख्येयगुणानि । तेभ्यस्त्रिप्रदेशावगाढानि । एवमुत्तरोत्तरं यावदुत्कृष्टसङ्ख्येयप्रदेशावगाढानि । असङ्ख्येयप्रदेशावगाढाः पुद्गला द्रव्यार्थतयाऽसङ्ख्येयगुणाः, असङ्ख्यातस्यासङ्ख्यातभेदभिन्नत्वात्, त एव प्रदेशार्थतयाऽसङ्ख्येयगुणाः । कालतश्चैकसमयस्थितिकादीनि क्षेत्रावगाढवद्वाच्यानि ॥ ११० ॥

**कालाई जह पुग्गल कक्कडमिउगुरुयलहुयफासाओ । ओगाढा जह नेया इत्थ पएसापएसट्ठो ॥ १११ ॥**

भावत एकगुणकालकादयः पुद्गलद्रव्यवद्वाच्याः । तथाहि—अनन्ताणुका एकगुणकालका द्रव्यार्थतया स्तोकाः १ । त एवैकगुणकालकाः प्रदेशार्थतयाऽनन्तगुणाः २ । अणव एकगुणकालका द्रव्यप्रदेशार्थाभ्यामनन्तगुणाः ३ । सङ्ख्याताणुका

अन्ने लिंगकुसीलं, तु तवकुसीलस्स ठाणए बिंति ।

अथवा कषायैर्ज्ञानादीनां यो विराधकः स ज्ञानादिकुशीलो ज्ञेयः 'व्याख्यानभेदेन' व्याख्याप्रकारभेदेन ॥ २७ ॥
अन्ये तपःकुशीलस्थाने लिङ्गकुशीलं पठन्ति ॥

निग्गंथो पुण गंथाओ मोहओ निग्गओ जो सो ॥ २८ ॥
उवसामओ य खवओ, दुहा नियंठो दुहावि पंचविहो । पढमसमओ अपढमो, चरमोऽचरमो अहासुहुमो॥
अंतमुहुत्तपमाणयनिग्गंथद्धाइ पढमसमयम्मि । पढमसमए नियंठो, अन्नेसु अपढमसमओ सो ॥३०॥
एमेव तयद्धाए, चरमे समयंमि चरमसमओ सो । सेसेसु पुण अचरमो, सामन्नेणं तु अहसुहुमो ॥ ३१ ॥

निर्गतो मोहनीयग्रन्थादिति निर्ग्रन्थः ॥ २८ ॥ स द्विधा, उपशान्तमोहः क्षीणमोहश्च । द्विधाऽपि पञ्चधा । अन्तर्मुहूर्तप्रमाणनिर्ग्रन्थकालसमयराशौ आदौ निर्ग्रन्थत्वं प्रतिपद्यमानः प्रथमसमयनिर्ग्रन्थः १ । अन्यसमयेषु वर्त्तमानोऽप्रथमः २ । पूर्वानुपूर्व्या चरमसमये चरमः ३ । पश्चानुपूर्व्या शेषेषु अचरमः ४ । यथासूक्ष्मनिर्ग्रन्थस्तु प्रथमाद्यविवक्षया सर्वसमयेषु वर्त्तमानः कथ्यते ५ ॥ २९ ॥ ३० ॥ ३१ ॥

सुहझाणजलविसुद्धो, कम्ममलाविक्खया सिणाओ त्ति । दुविहो य सो सजोगी, तहा अजोगी विणिद्दिट्ठो॥
सो पुण पंचविअप्पो, अच्छविओ असबलो अकम्मंसो । अप्परिसावी संसुद्धनाणदंसणधरो तह य ॥३३॥

थोवा गब्भयमणुया १ संखिज्जगुणा हवंति इत्थीओ २। पज्जत्तबायरानलकाया ३ अस्संखया हुंति ॥११५॥
तत्तोऽणुत्तरवासी असंखगुणिया हवंति४तत्तो उ। संखिज्जा गेविज्जा उवरिम५ मज्झिल्ल ६ हिट्ठिल्ला७॥११६॥
अच्चुय८आरण९पाणय१०आणय११देवा वि हुंति एमेव । तत्तो असंखगुणिया सत्तमपुढवीइ नेरइया १२॥

'थोवा' इति गाथाष्टादशकम् । स्तोका मनुष्याः, सङ्ख्येयकोटीकोटीप्रमाणत्वात् १ । मनुष्यस्त्रियः सङ्ख्येयगुणाः, सप्तविंशतिगुणत्वात्सप्तविंशत्यधिकत्वाच्च २ । ताभ्यो बादराग्नयः पर्याप्ता असङ्ख्येयगुणाः, कतिपयवर्गन्यूनावलिकाघनसमयप्रमाणत्वात् ३ ॥ ११५ ॥ अनुत्तरोपपातिनोऽसङ्ख्येयगुणाः, क्षेत्रपल्योपमासङ्ख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणत्वात् ४ । उपरितनग्रैवेयकत्रिकदेवाः सङ्ख्येयगुणाः, बृहत्तरक्षेत्रपल्योपमासङ्ख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणत्वात् । यतोऽनुत्तरसुराणां पञ्च विमानानि, उपरितनग्रैवेयकत्रिके तु विमानशतम्, प्रतिविमानं चासङ्ख्येया देवाः, यथा यथा चाधोऽधोवर्तीनि विमानानि तथा तथा देवा अपि प्राचुर्येण लभ्यन्त इति । एवमुत्तरत्रापि भावना कार्या यावदानतः ५ । मध्यमग्रैवेयकत्रिकदेवाः सङ्ख्येयगुणाः ६ । अधस्तनग्रैवेयकत्रिकदेवाः सङ्ख्येयगुणाः ७ ॥ ११६ ॥ अच्युतकल्पदेवाः सङ्ख्येयगुणाः ८ । आरणदेवाः सङ्ख्येयगुणाः । यद्यप्यारणाच्युतकल्पौ समश्रेणीकौ समविमानसङ्ख्याकौ तथापि कृष्णपाक्षिकास्तथास्वाभाव्यात्प्राचुर्येण दक्षिणस्यामुत्पद्यन्ते नोत्तरस्याम् । बहवश्च कृष्णपाक्षिकाः स्तोकाः शुक्लपाक्षिका इति ९ । प्राणतदेवाः सङ्ख्येयगुणाः १० । आनतदेवाः सङ्ख्येयगुणाः ११ । सप्तमपृथिवीनैरयिका असङ्ख्येयगुणाः, श्रेण्यसङ्ख्येयभागगतनभःप्रदेशराशिप्रमाणत्वात् १२ ॥११७॥

भण्णइ छवी सरीरं, जोगनिरोहेण तस्स य अभावे। अछवि त्ति होइ अहवा, खयाअभावेण अच्छविओ ॥
अस्सबलोऽणइयारो, निट्ठियकम्मो य होअकम्मंसो। निस्सेसजोगरोहे, अपरिस्सावी अकिरियत्ता ॥३५॥
असहायअसाहारण,अणंतनाणाइधरणओ होइ। संसुद्धनाणदंसणधरो सिणाओऽत्थ पंचविहो॥३६दारं १

शुक्लध्यानमेव कर्ममलक्षालनापेक्षया यज्जलं तेन विशुद्धः स्नातकः। स द्विधा, सयोग्ययोगी च विनिर्दिष्टः ॥ ३२ ॥ 'स पुनः' सयोग्ययोगी च पञ्चविकल्पः, अच्छविकः १ अशबलः २ अकर्मांशः ३ अपरिस्रावी ४ संशुद्धज्ञानदर्शनधरश्च ५ तथा ॥ ३३ ॥ छवियोगाच्छविः शरीरं भण्यते, तद् योगनिरोधेन यस्य नास्त्यसावच्छविकः। अन्ये तु क्षपी सखेदो व्यापारस्तस्यास्तित्वात् क्षपी, तन्निषेधादक्षपीति। अन्ये घातिचतुष्टयक्षपणानन्तरं तत्क्षपणाभावादक्षपी १ ॥ ३४ ॥ अशबलो विशुद्धचरणः, अतिचारपङ्काभावात् २। अकर्मांशो विगतघातिकर्मा ३। 'संशुद्धज्ञानदर्शनधरः' केवलज्ञानदर्शनधारी ४। परिस्रवति–आस्रवति कर्म बध्नातीत्येवंशीलः परिस्रावी, तत्प्रतिषेधादपरिस्रावी अबन्धको निरुद्धयोगः, अक्रियत्वात् ५। इह चावस्थाभेदेन भेदः, न केनचिद्वृत्तिकृता इहान्यत्र च ग्रन्थे व्याख्यातः। ततश्चैवं संभावयामः, शब्द–नयापेक्षया एतेषां भेदो भावनीयः। शक्रपुरन्दरादिवदिति ॥ ३५ ॥ 'असहायगाथा' स्पष्टा ॥ ३६ ॥ द्वारं प्रथमम् १ ॥

थीवज्जो उ पुलाओ, बउस्सपडिसेवगा तिवेयाऽवि। सकसाओ य तिवेओ, उवसंतक्खीणवेओ वा ॥३७॥
उवसंतखीणवेओ, निग्गंथो ण्हायओ खवियवेओ। दारं २।

ईशाने देवदेवीसमुदायः, तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पा ईशानदेवाः २५ । ईशानदेव्यः सङ्ख्येयगुणाः, द्वात्रिंशद्गुणत्वात् २६ । सौधर्मदेवाः सङ्ख्येयगुणाः, यथा माहेन्द्रापेक्षया सनत्कुमारे देवा असङ्ख्येयगुणा उक्ताः । इहापि दक्षिणस्यां कृष्णपाक्षिकोत्पत्त्यादिपूर्वोक्तयुक्तेर्विमानबाहुल्याच्च समानत्वेऽप्यत्र सङ्ख्येयगुणत्वं ज्ञेयं वचनप्रामाण्यात् २७ । सौधर्मदेव्यः सङ्ख्येयगुणाः, द्वात्रिंशद्गुणत्वात् २८ ॥ १२० ॥

**भवणसुर असंखिज्जा २९ देवी संखिज्ज ३० रयण अस्संखा ३१ ।**
**खयहरपुरिसा ३२ इत्थी ३३ थलयरपुरिसा य ३४ इत्थीओ ३५ ॥ १२१ ॥**

भवनवासिनोऽसङ्ख्येयगुणाः, यतोऽङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनि प्रथमे वर्गमूले द्वितीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु घनीकृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणो भवनपतिदेवदेवीसमुदायः, तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पाश्च तद्देवाः २९ । भवनपतिदेव्यः सङ्ख्येयगुणाः, द्वात्रिंशद्गुणत्वात् ३० । रत्नप्रभानारका असङ्ख्येयगुणाः, अङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनि प्रथमे वर्गमूले द्वितीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिस्तावत्प्रमाणासु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणत्वात् ३१ । खचरपञ्चेन्द्रियतिर्यग्योनिकाः पुरुषा असङ्ख्येयगुणाः, प्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिनभःप्रदेशराशिप्रमाणत्वात् ३२ । खचरपञ्चेन्द्रियतिर्यग्योनिकाः स्त्रियः सङ्ख्येयगुणाः, त्रिगुणत्वात् ३३ । स्थलचरपञ्चेन्द्रियतिर्यक्पुरुषाः सङ्ख्येयगुणाः, बृहत्तरप्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगतप्रदेशराशिप्रमाणत्वात् ३४ । तेषां स्त्रियः सङ्ख्येयगुणाः, त्रिगुणत्वात् ३५ ॥ १२१ ॥

अपर्याप्तसूक्ष्मपृथिवीकायिका विशेषाधिकाः ६५ । अपर्याप्तसूक्ष्माप्कायिका विशेषाधिकाः ६६ । अपर्याप्तसूक्ष्मवायुकायिका विशेषाधिकाः ६७ । सूक्ष्माग्निकायिकाः पर्याप्ताः सङ्ख्येयगुणाः, अपर्याप्तसूक्ष्मेभ्यः पर्याप्तसूक्ष्माणां स्वभावत एव प्राचुर्यात् ६८ ॥ १२७ ॥ पर्याप्तसूक्ष्मपृथिवीकायिका विशेषाधिकाः ६९ । पर्याप्तसूक्ष्माप्कायिका विशेषाधिकाः ७० । पर्याप्तसूक्ष्मवायुकायिका विशेषाधिकाः ७१ । अपर्याप्तसूक्ष्मनिगोदा असङ्ख्येयगुणाः ७२ । पर्याप्तसूक्ष्मनिगोदाः सङ्ख्येयगुणाः, यद्यपि च पर्याप्ततेजस्कायिकादयः पर्याप्तसूक्ष्मनिगोदपर्यन्ता अविशेषेणान्यत्राप्यसङ्ख्येयलोकाकाशप्रदेशराशिप्रमाणा उक्तास्तथापि लोकासङ्ख्येयत्वस्यासङ्ख्येयभेदभिन्नत्वादित्थमल्पबहुत्वमभिधीयमानमुपपन्नं द्रष्टव्यम् ७३ ॥ १२८ ॥ अभवसिद्धिका अनन्तगुणाः, जघन्ययुक्तानन्तकप्रमाणत्वात् ७४ । प्रतिपतितसम्यग्दृष्टयोऽनन्तगुणाः ७५ । सिद्धा अनन्तगुणाः ७६ । पर्याप्तबादरवनस्पतिकायिका अनन्तगुणाः ७७ । सामान्यतो बादरपर्याप्ता विशेषाधिकाः, बादरपर्याप्तपृथिव्यादीनामपि तत्र प्रक्षेपात् ७८ ॥ १२९ ॥

बायरवण अपजत्ता असंख ७९ बायरसमत्त सविसेसा ८० ।
सविसेस बायरा ८१ सुहुमवण अपज्जा ८२ असंखिज्जा ॥ १३० ॥
सुहुम असमत्त अहिया ८३ सुहुमवणस्सइ य संख पज्जत्ता ८४ ।
सुहुमसमत्ता ८५ सुहुमा ८६ भविया य ८७ निगोय ८८ वणजीवा ८९ ॥ १३१ ॥

मूलुत्तरगुणविसयापडिसेवासेवए पुलाए अ। उत्तरगुणेसु बउसो, सेसा पडिसेवणारहिया ॥४१॥ दारं ६ ॥

पुलाकवकुशप्रतिसेवनाकुशीला आदिमे सामायिकच्छेदोपस्थापनीयरूपे संयमद्वये। कषायकुशीलो यथाख्यातं विना शेषेषु चतुर्षु सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपरायेषु। निर्ग्रन्थस्नातका यथाख्याते एव संयमे भवन्ति ॥ ४० ॥ द्वारं पञ्चमम् ५ ॥ मूलगुणाः प्राणातिपातविरमणादयः, दशविधप्रत्याख्यानादयस्तूत्तरगुणाः, तद्विषया प्रतिसेवा मूलोत्तरगुणप्रतिसेवा तस्या आसेवकः पुलाकः प्रतिसेवाकुशीलश्च। वकुश उत्तरगुणप्रतिसेवकः। शेषाः प्रतिसेवनारहिताः ॥ ४१ ॥ द्वारं षष्ठम् ६ ॥

बउसासेविपुलाया, आइमनाणेसु दोसु तिसु वावि। ण्हाओ केवलनाणे, सेसा पुण चउसु भयणाए ॥४२॥

पढमस्स जहन्नेणं, होइ सुअं जाव नवमपुव्वस्स। आयारतइयवत्थुं, उक्कोसेणं तु नवपुव्वा ॥ ४३ ॥

बउसकुसीलनियंठाणं पवयणमायरो जहन्नसुअं। बउसपडिसेवगाणं, पुव्वाइँ दसेव उक्कोसं ॥ ४४ ॥

निग्गंथकसाईणं, चउदस उ सिणायओ सुयाईओ ॥ दारं ७ ॥

आइतियं तित्थंमि उ, तित्थातित्थेसु अंततियं ॥ ४५ ॥ दारं ८ ॥

वकुशप्रतिसेवाकुशीलपुलाकाः 'द्वयोर्ज्ञानयोः' मतिश्रुतयोः, 'त्रिषु' मतिश्रुतावधिषु वा। स्नातकः केवलज्ञाने। कषायकुशीलनिर्ग्रन्था भजनया चतुर्षु ज्ञानेषु ॥ ४२ ॥ पुलाकस्य जघन्यतः श्रुतज्ञानं नवमपूर्वतृतीयवस्तु यावत्। उत्कृष्टतो

नव पूर्वाणि भवन्ति ॥ ४३ ॥ बकुशप्रतिसेवनाकुशीलकषायकुशीलनिर्ग्रन्थानां जघन्यतोऽष्टौ प्रवचनमातरः । एतच्च 'अट्ठण्हं पवयणमाइणं' इत्यस्य यद्विवरणसूत्रं तत्संभाव्यते । यत्तूत्तराध्ययनेषु प्रवचनमातृकं नामाध्ययनं तद्गुरुत्वाद्विशिष्टतरश्रुतत्वाज्जघन्यतो न संभवति । वाहुल्याश्रयं चेदं श्रुतप्रमाणं तेन न मापतुपादिना व्यभिचारः । भगवत्यां २५ शतके । बकुशप्रतिसेवनाकुशीलानामुत्कर्षतो दश पूर्वाणि ॥ ४४ ॥ निर्ग्रन्थसकषायाणामुत्कर्षतश्चतुर्दश पूर्वाणि । स्नातकः पुनः श्रुतातीतः ॥ द्वारं सप्तमम् ७ ॥ पुलाकबकुशप्रतिसेवनाकुशीलास्तीर्थे । कषायकुशीलनिर्ग्रन्थस्नातकास्तु तीर्थेऽप्यतीर्थेऽपि स्युः । यद्यतीर्थे तदा तीर्थकरप्रत्येकबुद्धा एव ॥ ४५ ॥ द्वारं अष्टमम् ८ ॥

**नियलिंगे परलिंगे, गिहिलिंगे वाऽवि दव्वओ हुज्जा । नियलिंगि च्चिय भावेण हुज्ज सव्वे पुलागाई ॥४६॥ दारं९।**
**ण्हायनियंठपुलाया, ओरालियतेयकम्मणसरीरा । बउसासेवि विउव्वा वि कसायाहारगतणू वि ॥॥ दारं१०॥**
**कम्मधराइ पुलाओ, सेसा जम्मेण कम्मभूमीसु । संहरणेणं पुण ते, अकम्मभूमीसु वि हविज्जा ॥ दारं११॥**

पुलाकादयो द्रव्यलिङ्गं प्रतीत्य स्वलिङ्गेऽन्यलिङ्गे गृहिलिङ्गे वा भवन्ति । भावलिङ्गं पुनः प्रतीत्य स्वलिङ्गे एव भवन्ति ॥ ४६ ॥ द्वारं नवमम् ९ ॥ स्नातकनिर्ग्रन्थपुलाका औदारिकतैजसकार्मणशरीरा भवन्ति । बकुशासेवनाकुशीलाः सवैक्रिया अपि स्युः । कषायकुशीला आहारकतनुमन्तोऽपि स्युः ॥ ४७ ॥ द्वारं दशमम् १० ॥ पुलाकः कर्मभूमौ जायते, तत्रैव च विहरति । नाकर्मभूमौ जायते, तज्जातस्य चारित्राभावात् । नाप्यकर्मभूमौ वर्त्तते, पुलाकत्वे वर्त्तमानस्य देवा-

दिभिः संहर्तुमशक्यत्वात् । शेषा वकुशादयः पञ्च जन्मतः कर्मभूमीषु भवन्ति । संहरणतोऽकर्मभूमीष्वपि संभवन्ति ॥ ४८ ॥ द्वारमेकादशम् ११ ॥

तइयचउत्थसमासुं, जम्मेणोसप्पिणीइ उ पुलाओ । संतइभावेणं पुण, तईयचउपंचमीसु सिया ॥ ४९ ॥
उस्सप्पिणीइ बीयातइयचउत्थीसु हुज्ज जम्मणओ । संतइभावेणं पुण, तइयचउत्थीसु सो हुज्जा ॥५०॥
ओसप्पिणिउस्सप्पिणिवइरित्ते जम्मणेण संतीए । हुज्ज चउत्थे काले, पुलायसमणो तहन्नेऽवि ॥ ५१ ॥
बउसकुसीला ओसप्पिणीइ संतीए जम्मणेणं च । तिचउत्थपंचमीसुं, समासु उस्सप्पिणीइ पुणो॥५२॥
बियतियचउत्थियासुं,जम्मणओ संतओ तितुरियासु। निग्गंथसिणायाणं, जम्मणसंती जह पुलाए॥५३॥
संहरणेणं सव्वेऽवि हुंति सव्वेसु चेव कालेसु । मुत्तु पुलायं समणं, एवं कालु त्ति विक्खायं ॥५४॥ दारं१२॥

पुलाकोऽवसर्पिण्यां जन्मतस्तृतीये चतुर्थे चारके स्यात् । सद्भावं प्रतीत्य तृतीयचतुर्थपञ्चमारकेषु भवेत् । तत्र चतुर्थारके जातः सन् पञ्चमेऽपि वर्त्तते ॥ ४९ ॥ उत्सर्पिण्यां द्वितीयतृतीयचतुर्थारकेषु जन्मतो भवति । सद्भावं प्रतीत्य पुनस्तृतीयचतुर्थयोरेव सत्ता, तस्य तयोरेव चरणप्रतिपत्तेरिति ॥ ५० ॥ अवसर्पिण्युत्सर्पिणिव्यतिरिक्ते चतुर्थारकलक्षणे काले महाविदेहेषु नित्यं विद्यमाने पुलाकः श्रमणो जन्मतः सत्तया च वर्त्तते । तथाऽन्येऽपि ॥ ५१ ॥ बकुशकुशीला

अवसर्पिण्यां जन्मतः सत्तया च तृतीगचतुर्थपञ्चमारकेषु स्युः । उत्सर्पिण्यां पुनर्जन्मतो द्वितीयतृतीयचतुर्थारकेषु सत्तया तृतीयचतुर्थारकेषु । निर्ग्रन्थस्नातकानां जन्मसत्ते पुलाकवद्वाच्ये ॥ ५२ ॥ ५३ ॥ संहरणतः सर्वेऽपि सर्वकालेषु स्युः । संहरणं पुलाकस्य पूर्वोक्तयुक्त्या नास्ति । निर्ग्रन्थस्नातकयोः पूर्वसंहृतयोर्निर्ग्रन्थत्वस्नातकत्वप्राप्तो द्रष्टव्यम्, अपगतवेदानां संहरणाभावात् । यदुक्तम्—"समणीमवगयवेयं, परिहारपुलायमप्पमत्तं च । चउदसपुव्विं आहारगं च न य कोइ संहरइ ॥ १ ॥" इति ॥ ५४ ॥ द्वारं द्वादशम् १२ ॥

अंतिमदुयवज्जाणं, उववाओ जहन्नओ उ सोहम्मे । उक्कोसेणं सो पुण, होइ पुलायस्स सहसारे ॥ ५५ ॥

बउसपडिसेवयाणं, तु अच्चुएऽणुत्तरेसु सकसाए । अजहन्नाणुक्कोसेणणुत्तरेसुं नियंठस्स ॥ ५६ ॥

सिद्धीइ ण्हायगस्स उ, एए अविराहगा पुण हविज्जा । इंदा सामाणिय तायतीसगा लोगपाला वा ॥५७॥

पलियपुहुत्तं थोवं, देवठिई अंतदुयविवज्जाणं । उक्कोसा सव्वेसिं, जा जम्मि उ होइ सुरलोए ॥५८॥ दारं१३॥

निर्ग्रन्थस्नातकवर्जानां पुलाकादीनामुपपातो जघन्यतः सौधर्मे । उत्कर्षतः पुलाकस्य सहस्रारे ॥ ५५ ॥ बकुशप्रतिसेवकानामुत्कर्षतोऽच्युते । सकषायस्यानुत्तरेषु । अजघन्याऽनुत्कर्षतो निर्ग्रन्थस्यानुत्तरेषु ॥ ५६ ॥ स्नातकस्य सिद्धौ । एतेऽविराधकाः सन्त इन्द्रास्तत्सामानिकाः त्रायस्त्रिंशका लोकपाला वा स्युः, विराधकानां भवनपत्यादिषूत्पादात् ॥ ५७ ॥ निर्ग्रन्थस्नातकवर्जानां स्तोका देवस्थितिः पल्योपमपृथक्त्वम् । उत्कृष्टा तु यावती स्थितिर्यस्मिन् स्वर्गे स्यात् तावती ज्ञेया ॥ ५८ ॥ द्वारं त्रयोदशम् ॥ १३ ॥

पत्तेयमसंखिज्जा, संजमठाणा हवंति हु चउण्हं । निग्गंथसिणायाणं, इक्कं चिय संजमट्ठाणं ॥ ५९ ॥
निग्गंथसिणायाणं, तुल्लं इक्कं च संजमट्ठाणं । पत्तेयमसंखगुणा, पुलायबउसाण ते हुंति ॥ ६० ॥
पडिसेवकसाईणं, तहेव तत्तो असंखगुणिया य । छण्हं पि य पत्तेयं, चारित्तियपज्जवाणंता ॥६१॥ दारं १४॥

संयमः चारित्रं तस्य स्थानानि शुद्धिप्रकर्षापकर्षकृता भेदाः संयमस्थानानि, तानि प्रत्येकं सर्वाकाशप्रदेशाग्रगुणितसर्वाकाशप्रदेशपरिमाणपर्यवोपेतानि । तानि पुलाकादीनां चतुर्णामसङ्ख्येयानि स्युः, विचित्रत्वाच्चारित्रमोहनीयक्षयोपशमस्य । निर्ग्रन्थस्नातकानामेकसेव संयमस्थानम्, उपशमस्य क्षयस्य वा शुद्धेरेकविधत्वात् ॥ ५९ ॥ निर्ग्रन्थस्नातकानां सर्वस्तोकं संयमस्थानम्, एकविधविशुद्धित्वात् । पुलाकबकुशप्रतिसेवाकषायकुशीलानां क्रमेणासङ्ख्येयगुणानि तानि, क्षयोपशमवैचित्र्यात् । प्रत्येकं चारित्रपर्यवा अनन्ताः ॥ ६० ॥ ६१ ॥ द्वारं चतुर्दशम् ॥ १४ ॥

सट्ठाणसन्निगासे, पुलओ पुलयस्स पज्जवेहिं समो । हीणहिओ छट्ठाणा, परठाणकसाइणो एवं ॥ ६२ ॥

'सन्निकर्षः' परस्परं संयोजनम् । 'सट्ठाणं' इति स्वं आत्मीयं सजातीयं स्थानं पर्यवाणामाश्रयस्तस्य सन्निकर्षस्तस्मिन् विचार्ये पुलाकः प्रतियोगिपुलाकस्य चारित्रपर्यवैः समः, तुल्यविशुद्धिकपर्यवयोगात् । हीनोऽविशुद्धपर्यवयोगाद् हीनः । विशुद्धतरपर्यवयोगादधिकः षट्स्थानगतश्च भवति । कथम् ? इत्याह—अनन्तभागहीनोऽसद्भावस्थापनया पुलाकस्योत्कृष्टसंयमस्थानपर्यवाग्रं दश सहस्राणि $\frac{१००००}{१००}$, तस्य सर्वजीवानन्तकेन शतपरिमाणतया कल्पितेन भागे हृते शतं १००

लब्धं, द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नव सहस्राणि नवशताधिकानि ९९००/१०० पूर्वभागे लब्धं शतं तत्र प्रक्षिप्तं
जातानि दश सहस्राणि, ततोऽसौ सर्वजीवानन्तकभागहारलब्धेन शतेन हीन इत्यनन्तभागहीनः १। असङ्ख्येयभागहीनः
पूर्वोक्तपर्यायराशेर्दशसहस्रस्य १००००/५० लोकाकाशप्रदेशपरिमाणेनासङ्ख्येयकेन कल्पनया पञ्चाशत्प्रमाणेन भागे हृते लब्धा
द्विशती द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नव सहस्राण्यष्टौ शतानि ९८००/२०० पूर्वभागे लब्धा च द्विशती तत्र प्रक्षिप्ता
जातानि दश सहस्राणि, ततोऽसौ लोकाकाशप्रदेशपरिमाणासङ्ख्येयभागहारलब्धेन शतद्वयेन हीन इत्यसङ्ख्येयभाग-
हीनः २। सङ्ख्येयभागहीनः पूर्वकल्पितराशेर्दशसहस्रस्य १००००/१० उत्कृष्टसङ्ख्येयकेन कल्पनया दशकपरिमाणेन भागे हृते
लब्धं सहस्रं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नव सहस्राणि पूर्वभागलब्धं च सहस्रं तत्र प्रक्षिप्तं जातानि दश सह-
स्राणि, ततोऽसावुत्कृष्टसङ्ख्येयकभागहारलब्धेन सहस्रेण हीन इति सङ्ख्येयभागहीनः ३। सङ्ख्येयगुणहीन एकस्य पुला-
कस्य चरणपर्यवाग्रं कल्पनया सहस्रदशकं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं सहस्रं ततश्चोत्कृष्टसङ्ख्येयकेन कल्पनया
दशकपरिमाणेन गुणकारेण गुणितः सहस्रो राशिर्जायते दश सहस्राणि। स च तेनोत्कृष्टसङ्ख्येयकेन कल्पनया दशक-
परिमाणेन गुणकारेण हीनोऽनभ्यस्त इति सङ्ख्येयगुणहीनः ४। असङ्ख्येयगुणहीन एकस्य पुलाकस्य चरणपर्यवाग्रं कल्प-
नया दश सहस्राणि द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं द्विशती ततश्च लोकाकाशप्रदेशपरिमाणेनासङ्ख्येयकेन कल्पनया
पञ्चाशत्परिमाणेन गुणकारेण गुणितो द्विशतिको राशिर्जायते दश सहस्राणि। स च तेन लोकाकाशप्रदेशपरिमाणासङ्ख्येय-
केन कल्पनया पञ्चाशत्परिमाणेन गुणकारेण हीन इत्यसङ्ख्येयगुणहीनः ५। अनन्तगुणहीन एकस्य पुलाकस्य चरणपर्य-

वाग्रं कल्पनया सहस्रदशकं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं च शतं, ततश्च सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण गुणितः शतिको राशिर्जायते दश सहस्राणि । स च तेन सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण हीन इत्यनन्तगुणहीनः ६ । एवमधिकषट्स्थानकशब्दार्थोऽप्येभिर्भागहारगुणकारैर्व्याख्येयः । तथाहि—एकस्य पुलाकस्य कल्पनया दश सहस्राणि चरणपर्यवाग्रं, तदन्यस्य नवशताधिकानि नव सहस्राणि, ततो द्वितीयापेक्षया प्रथमोऽनन्तभागाधिकः । तथा यस्य नव सहस्राणि अष्टौ च शतानि चरणपर्यवाग्रं तस्मात्प्रथमोऽसङ्ख्येयभागाधिकः । तथा यस्य नव सहस्राणि चरणपर्यवाग्रं तस्मात्प्रथमः सङ्ख्येयभागाधिकः । तथा च यस्य चरणपर्यवाग्रं सहस्रमानं तदपेक्षया प्रथमः सङ्ख्येयगुणाधिकः । तथा यस्य चरणपर्यवाग्रं द्विशती तदपेक्षयाऽऽद्योऽसङ्ख्येयगुणाधिकः । तथा च यस्य चरणपर्यवाग्रं शतमानं तदपेक्षया प्रथमोऽनन्तगुणाधिक इति । 'परठाणकसाइणो एवं' इति पुलाकः पुलाकापेक्षया यथोक्तस्तथा कषायकुशीलापेक्षयापि वाच्यः । तत्र पुलाकः कषायकुशीलाद् हीनो वा तुल्यो वा अधिको वा स्यात् । यतः पुलाकस्य कषायकुशीलस्य च सर्वजघन्यानि संयमस्थानान्यधस्ततस्तौ युगपदसङ्ख्येयानि तानि गच्छतः, तुल्याध्यवसायत्वात् । ततः पुलाको व्यवच्छिद्यते, हीनपरिणामत्वात् । व्यवच्छिन्ने च पुलाके कषायकुशील एकक एवासङ्ख्येयानि संयमस्थानानि गच्छति, शुभपरिणामत्वात् । ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसङ्ख्येयानि संयमस्थानानि गच्छन्ति । ततो बकुशो व्यवच्छिद्यते । प्रतिसेवनाकषायकुशीलावसङ्ख्येयानि संयमस्थानानि गच्छतः । ततश्च प्रतिसेवना-

कुशीलो व्यवच्छिद्यते । कषायकुशीलस्त्वसङ्ख्येयानि संयमस्थानानि गच्छति । ततः सोऽपि व्यवच्छिद्यते । ततो निर्ग्रन्थ-स्नातकौ एकं संयमस्थानं प्राप्नुतः ॥ ६२ ॥

बउसासेविनियंठगण्हायाणं हुज्जऽणंतगुणहीणो । बउसो सठाणसेवगकसाइणं तुल्लग छठाणो ॥ ६३ ॥
एवं सेविकसाई, नेया निग्गंथण्हायगा य पुणो । तुल्ला इयराणं पुण, अहिया तेऽणंतगुणिएणं ॥ ६४ ॥
सकसायपुलायाणं, समा जहन्ना उ पज्जवा थोवा । तेहिंतोऽणंतगुणा, उक्कोसा ते पुलायस्स ॥ ६५ ॥
बउसपडिसेवगाणं, समा जहन्ना तएहऽणंतगुणा । बउसासेविकसाईणुक्कोसाणंतगा कमसो ॥ ६६ ॥

निग्गंथसिणायाणं, अजहन्नुक्कोसया समा हुंति ।
पुरिमाणमणंतगुणा, निगासदारं गयं एयं ॥ ६७ ॥ दारं १५ ॥

बकुशासेविनिर्ग्रन्थस्नातकेभ्यः पुलाकोऽनन्तगुणहीनः, तथाविधविशुद्ध्यभावात् । बकुशः प्रतियोगिबकुशासेविक-षायिणां स्यात्तुल्यः स्याद्धीनोऽधिकश्च षट्स्थानेन । निर्ग्रन्थस्नातकेभ्यस्त्वनन्तगुणहीनः ॥ ६३ ॥ 'एवं' इति बकुशवक्तव्य-तावत्सेविकषायिणौ ज्ञेयौ । नवरं पुलाकाद्बकुशोऽभ्यधिक एव । कषायी तु षट्स्थानगतो वाच्यो हीनादिरित्यर्थः । निर्ग्र-न्थस्नातकौ तु मिथः स्वस्थानपरस्थानाभ्यां समौ, एक संयमस्थानवर्त्तित्वात् । इतरेभ्यः पुलाकादिभ्योऽधिकौ, अनन्त-

गुणेन विशुद्धसंयमपर्यायवत्त्वात् ॥ ६४ ॥ अथ पर्यवाधिकारात्तेषामल्पबहुत्वमाह—पर्यवाश्चारित्रपर्यायाः, ते सकषायस्य पुलाकस्य च जघन्यास्तुल्याः, ते च सर्वस्तोकाः । तेभ्यः पुलाकस्योत्कृष्टा अनन्तगुणाः ॥ ६५ ॥ बकुशासेविनां चारित्रपर्यवाः जघन्याः समाः । उत्कृष्टाः पुनर्बकुशासेविकषायिणां क्रमेणानन्तगुणाः ॥ ६६ ॥ निर्ग्रन्थस्नातकानामजघन्योत्कर्पतश्चारित्रपर्यायाः समाः । पूर्वेभ्यः पुलाकादिभ्योऽनन्तगुणाः ॥ ६७ ॥ द्वारं पञ्चदशम् १५ ॥

मणवयकाइयजोगा, एए उ सिणायओ अजोगोऽवि ॥ दारं १६ ॥
दुविहुवओगा सव्वे, दारं १७ । आइतिअं चउकसाइल्लं ॥ ६८ ॥
सकसाओ पुण चउसु वि, तिसु दुसु वा इक्कहि व लोहंमि ।
खीणुवसंतकसाओ, निग्गंथो ण्हायगकसाओ ॥ ६९ ॥ दारं १८ ॥

मनोवाक्काययोगवन्तः सर्वे । स्नातकोऽयोग्यपि । द्वारं षोडशम् १६ । साकारानाकारोपयोगाः सर्वे । द्वारं सप्तदशम् १७ । पुलाकबकुशप्रतिसेवाकुशीलाः संज्वलनचतुष्कषायवन्तः ॥ ६८ ॥ सकषायः पुनरुपशमश्रेण्यां क्षपकश्रेण्यां वा चतुर्षु कषायेषु । संज्वलनक्रोध उपशान्ते क्षीणे वा त्रिषु । एवं माने विगते द्वयोः । मायायां विगतायामेकत्र लोभे । निर्ग्रन्थ उपशान्तकषायः क्षीणकषायो वा स्यात् । स्नातकः क्षीणकषाय्येव स्यात् ॥ ६९ ॥ द्वारमष्टादशम् १८ ॥

आइतियं सुहलेसं, कसायवं छसु वि छट्ठिइ नियंठो । ण्हाओ य परमसुक्को, लेसाईओ व हुज्जाहि ॥ दारं १९॥

पुलाकबकुशप्रतिसेवाकुशीलत्रयं भावलेश्यापेक्षया प्रशस्तासु तिसृषु लेश्यासु । कषायी षट्स्वपि । निर्ग्रन्थः षष्ठ्याम् ।
स्नातकः परमशुक्लः लेश्यातीतो वा ॥ ७० ॥ द्वारमेकोनविंशम् १९ ॥

निग्गंथसिणायया हुंति ॥ ७१ ॥
वड्ढंतहीयमाणयवट्ठियपरिणामया कसायंता । नो हीयमाणभावा,
सेसाओ आइमचउण्हं ॥ ७२ ॥
समयावट्ठियभावो, जहन्न इयरो उ सत्तसमयाओ । समयंतमुहुत्ताइं,
अंतमुहुत्तं च उक्कोसो ॥ ७३ ॥
निग्गंथंतमुहुत्तं, दुहावि भावो पवड्ढमाणो उ । समयं जहन्नवट्ठिय,

ण्हायस्स वड्ढमाणो, अंतमुहुत्तं दुहावि परिणामो ।

एवं अवट्ठिओ वि हु, उक्कोसो पुव्वकोडूणो ॥ ७४ ॥ दारं २० ॥

निर्ग्रन्थो न हीयमानपरिणामः, तस्य परिणामहानौ कषायकुशी-
वर्द्धमानहीयमानावस्थितपरिणामाः सकषायं यावत् । पुलाकादीनां चतुर्णां जघन्यतोऽवस्थित-
लव्यपदेशात् । स्नातकस्तु हानिकरणाभावान्न हीयमानपरिणामः ॥ ७१ ॥ उत्कर्षतोऽन्तर्मुहूर्त्तम् । तत्र
भावः समयम्, उत्कर्षतः सप्त समयान् । शेषौ वर्द्धमानहीयमानभावौ जघन्यतः समयम्, जघन्येनैकं सम-
पुलाको वर्द्धमानपरिणामकाले कषायविशेषेण बाधिते तस्मिंस्तस्यैकादिकं समयमनुभवति, अत उच्यते, नवरं बकुशा-
यम्, उत्कर्षतोऽन्तर्मुहूर्त्तम्, एतत्स्वभावत्वाद्वर्द्धमानपरिणामस्य । एवं बकुशप्रतिसेवाकषायकुशीलेष्वपि ।

दीनामेकसमयता मरणादपीष्टा, न पुनः पुलाकस्य, पुलाकत्वे मरणाभावात् । स हि मरणकाले कषायकुशीलत्वादिना परिणमति । यच्च प्राक् पुलाकस्य कालगमनं तद्भूतभावापेक्षया ॥ ७२ ॥ निर्ग्रन्थो जघन्येनोत्कर्षेण चान्तर्मुहूर्त्तं वर्द्धमानपरिणामः स्यात्, केवलोत्पत्तौ परिणामान्तराभावात् । अवस्थितपरिणामः पुनर्निर्ग्रन्थस्य जघन्यत एकं समयं मरणात् स्यात् ॥ ७२ ॥ स्नातको द्विधाप्यन्तर्मुहूर्त्तं वर्द्धमानपरिणामः शैलेश्यां तस्यास्तत्प्रमाणत्वात् । अवस्थितपरिणामोऽपि जघन्यतः तस्यान्तर्मुहूर्त्तम् । कथम् ? उच्यते, यः केवलोत्पादादनन्तरमन्तर्मुहूर्त्तमवस्थितपरिणामो भूत्वा शैलेशीं प्रतिपद्यते । 'उक्कोसो पुव्वकोडूणो' इति पूर्वकोट्यायुषः पुरुषस्य जन्मतो जघन्येन नवसु वर्षेष्वतिगतेषु केवलज्ञानमुत्पद्यते, ततोऽसौ तदूनां पूर्वकोटीमवस्थितपरिणामः शैलेशीं यावद्विहरति । शैलेश्यां च वर्द्धमानपरिणामः स्यादित्येवं देशोनां पूर्वकोटीमिति ॥ ७४ ॥ द्वारं विंशतितमम् २० ॥

**बंधइ सत्त पुलाओ, कम्मप्पयडीओ आउवज्जाओ । बउसासेवी सत्तट्ठ कसाई सत्त अट्ठ छ वा ॥ ७५ ॥**
**मोहाउवज्जिया छ उ, निग्गंथो वेयणियमेविक्कं । ण्हाओ अ सायवेयं, बंधइ बंधेण रहिओ वा॥७६॥दारं२१॥**

पुलाक आयुर्वर्जाः सप्त कर्मप्रकृतीर्बध्नाति । पुलाकस्यायुर्बन्धो नास्ति, तद्बन्धाध्यवसायस्थानानां तस्याभावात् । बकुशप्रतिसेवाकुशीलौ सप्providedाष्टौ वा प्रकृतीर्बध्नीतः, आयुर्बन्धस्यापि तयोः संभवात् । कषायकुशीलः सप्ताष्टौ वा प्रमत्तान्तेषु गुणस्थानेषु बध्नाति । सूक्ष्मसम्परायत्वे आयुर्न बध्नाति, अप्रमत्तत्वात् । मोहनीयं च बादरकषायोदयाभावान्न बध्नाति

पुलाकः षड् प्रकृतीरुदीरयति न वेदनीयायुषी, तथाविधाध्यवसायाभावात् । किन्तु पूर्वं ते उदीर्य पुलाकतां गच्छति । एवमुत्तरत्रापि या याः प्रकृतीर्नोदीरयति स ताः पूर्वमुदीर्य बकुशादितां प्राप्नोति। बकुशासेविकुशीलौ सप्ताष्टौ षड् वा उदीरयतः । कषायी सप्तायुर्वर्जाः, पञ्च वेदायुर्मोहवर्जाः, द्वे नामगोत्रे वा उदीरयति । स्नातको नामगोत्रयोरुदीरकः । आयुर्वेदनीये पूर्वोदीर्णे एव ॥ द्वारं त्रयोविंशम् २३ ॥ द्वारं 'उवसंपजहण' इति । तत्र पुलाकः पुलाकत्वं त्यक्त्वा संयतः कषायकुशील एव स्यात्, तत्सदृशसंयमस्थानसद्भावात् । एवं यस्य यत्सदृशानि संयमस्थानानि सन्ति स तद्भावमुपपद्यते, मुक्त्वा कषायकुशीलादीन् ॥ ७८ ॥ ७९ ॥ ८० ॥ बकुशो बकुशत्वं त्यक्त्वा प्रतिसेवाकुशीलः कषायकुशीलो देशविरतिमान् अविरतो वा स्यात् । प्रतिसेवाकुशीलः प्रतिसेवित्वं त्यक्त्वा बकुशः कषायकुशीलः श्राद्धोऽविरतो वा स्यात् ॥ ८१ ॥ सकषायः कषायित्वं त्यक्त्वा पुलाको बकुशः प्रतिसेवाकुशीलो निर्ग्रन्थः श्राद्धोऽविरतो वा स्यात् ॥ ८२ ॥ निर्ग्रन्थो निर्ग्रन्थत्वं त्यक्त्वा कषायित्वं याति, स्नातकत्वं वा याति, असंयतो वा भवति । तत्रोपशमनिर्ग्रन्थः श्रेणीतः प्रच्यवमानः सकषायो भवति । श्रेणीमस्तके मृतोऽसौ देवत्वेनोत्पन्नोऽसंयतो भवति न संयतासंयतः, देवत्वे तदभावात् । स्नातकस्तु सिध्यत्येव ॥ ८३ ॥ द्वारं चतुर्विंशम् २४ ॥

**ण्हायनियंठपुलाया, नो उवउत्ता हवंति सन्नासु ।**
**सेसा दुहावि हुज्जा, दारं २५ । ण्हाओ दुह सेसगाहारा ॥ ८४ ॥ दारं २६ ॥**

स्नातकनिर्ग्रन्थपुलाकाः संज्ञासु नोपयुक्ताः, आहारादिष्वनभिष्वङ्गात्, यतो ज्ञानप्रधानोपयोगवन्तस्ते । शेषा बकुशा-

दयस्तूभयथापि, तथाविधसंयमस्थानभावात् ॥ द्वारं पञ्चविंशम् २५ ॥ स्नातको द्विधा केवलिसमुद्घाते तृतीयचतुर्थपञ्च-
मसमयेष्वयोग्यवस्थायां चानाहारकः स्यात्, ततोऽन्यत्र पुनराहारकः स्यात् । शेषाः पुलाकादय आहारका एव
भवन्ति ॥ ८४ ॥ द्वारं षड्विंशम् २६ ॥

**पंचवि य जहन्नेणं, एगभवुक्कोसओ कमेणेवं । पुलयस्स तिन्नि तिण्हं, तु अट्ठ तिन्नेव इक्को य ८५॥ दारं२७॥**

पुलाकबकुशकुशीलनिर्ग्रन्थस्नातकाः जघन्येनैकभवेन सिध्यन्ति । उत्कर्षतः पुलाकस्य त्रयो भवाः । बकुशप्रतिसेवाक-
षायकुशीलानामष्टौ । निर्ग्रन्थस्य त्रयः । स्नातकस्यैकः । तत्र पुलाको जघन्यत एकस्मिन् भवग्रहणे भूत्वा कषायकुशी-
लत्वादिकं संयतत्वान्तरं एकशोऽनेकशो वा तत्रैव भवे भवान्तरे वाऽवाप्य सिध्यति । उत्कृष्टतस्तु देवादिभवान्तरितान्
त्रीन् भवान् पुलाकत्वमाप्नोति । इह बकुशादिः कश्चिदेकत्र भवे बकुशत्वमवाप्य कषायकुशीलत्वादि च सिध्यति । कश्चि-
च्चैकत्रैव भवे बकुशत्वमवाप्य भवान्तरे तदन्यानि एवं सिध्यति । अत उच्यते जघन्येनैकभवग्रहणं उत्कर्षतोऽष्टौ भवग्र-
हणानि चरणमात्रमवाप्यते । तत्र कश्चित्तान्यष्टौ बकुशतया पर्यन्तिमभवे सकषायत्वादियुक्तया कश्चित्तु प्रतिभवं प्रतिसेवा-
कुशीलत्वादियुक्तया पूरयति ॥ ८५ ॥ द्वारं सप्तविंशम् २७ ॥

**इक्को य जहन्नेणं, आगरिसुक्कोसओ कमेणेव । पुलयस्स तिन्नि तिण्हं, सयग्गसो दुन्नि इक्को य ॥ ८६ ॥**
**नाणभवे आगरिसा, हुंति जहन्नेण दोन्नि पंचण्हं । उक्कोसओ कमेणं, सत्त हवं ते पुलायस्स ॥ ८७ ॥**

**सहसग्गसो उ तिण्हं, पंच नियंठस्स ण्हायए नत्थि ॥ दारं २८ ॥**

पुलाकादीनां षण्णामपि एकस्मिन् भवे जघन्यत एक आकर्षश्चारित्रस्य प्राप्तिरित्यर्थः । उत्कर्षतः क्रमेण पुलाकस्यैकस्मिन् भवे त्रय आकर्षाः । वकुशप्रतिसेवाकषायकुशीलानां त्रयाणां 'सयग्गसो' शतपरिमाणेन शतपृथक्त्वमितिभावः । एकत्र भवे वारद्वयमुपशमश्रेणिकरणादुपशमनिर्ग्रन्थस्य द्वावाकर्षौ । स्नातकस्यैक एवाकर्षः, तस्य प्रतिपाताभावात् ॥ ८६ ॥ नानाभवेषु पुलाकादीनां पञ्चानां जघन्येन द्वावाकर्षौ । एक आकर्ष एकत्र भवे, द्वितीयोऽन्यत्र भवे, इत्येवमनेकत्र भवे द्वावाकर्षौ । उत्कर्षतः क्रमेण पुलाकत्वमुत्कर्षतस्त्रिषु भवेषु स्यात् । एकत्र भवे तदुत्कर्षतो वारत्रयं भवति, ततश्च प्रथमभवे एक आकर्षोऽन्यत्र च भवद्वये त्रयस्त्रयः इत्यादिविकल्पैः सप्त ते भवन्ति ॥ ८७ ॥ 'सहसग्गसो' इति वकुशस्याष्टौ भवग्रहणान्युक्तानि । एकत्र च भवग्रहणे उत्कर्षत आकर्षाणां शतपृथक्त्वमुक्तम् । तत्र यदाऽष्टास्वपि भवग्रहणेषूत्कर्षतो नव नव प्रत्येकमाकर्षशतानि भवन्ति तदा नवानां शतानामष्टाभिर्गुणनात् सप्त सहस्राणि शतद्वयाधिकानि स्युरिति । एवं प्रतिसेवाकषायकुशीलयोरपि । 'पंच नियंठस्स' निर्ग्रन्थस्योत्कर्षतस्त्रीणि भवग्रहणानि । एकत्र च भवे द्वावाकर्षौ इत्येवमेकत्र द्वौ अन्यत्र द्वौ अपरत्र चैकं क्षपकनिर्ग्रन्थत्वाकर्षं कृत्वा सिध्यतीति पञ्च । स्नातके नानाभवत्वं नास्ति, एकभवेनैव मुक्तिगमनात् ॥ द्वारमष्टाविंशम् ॥ २८ ॥

**अंतमुहुत्तं कालो, होइ दुहावी पुलायस्स ॥ ८८ ॥**

समयं होइ नियंठो, अंतमुहुत्तं तु उक्कोसो ॥८९॥
बउसासेवि कसाई, जहन्नओ समयमियरओ कोडी । देसूणा कोडी खलु, बउसाई हुंति सव्वद्धं ॥ ९० ॥
ण्हाओ अंतमुहुत्तं, जहन्नओ इयरओ य पुव्वाणं । उक्कोसेणं पुण ते, अंतमुहुत्तं चिय हवंति ॥९१॥दारं२९॥
निग्गंथा य पुलाया, इक्कं समयं जहन्नओ हुंति।

अन्तर्मुहूर्तकालो द्विधापि पुलाकस्य स्याद् यतः पुलाकत्वं प्रतिपन्नोऽन्तर्मुहूर्त्तापरिपूर्तौ पुलाको न म्रियते नापि प्रति-
पततीति जघन्यतोऽप्यन्तर्मुहूर्त्तमुत्कर्षतोऽप्यन्तर्मुहूर्त्तम्, एतत्प्रमाणत्वादेतत्स्वभावस्य ॥ ८८ ॥ बकुशासेविकषायिणां
जघन्यतः समयः कालः, बकुशादेश्चरणप्रतिपत्त्यनन्तरसमय एव मरणसंभवात्। उत्कर्षतः 'कोडी' इति देशोना पूर्व-
कोटिः, पूर्वकोट्यायुषोऽष्टवर्षान्ते चरणप्रतिपत्तौ इति । निर्ग्रन्थो जघन्यतः समयम्, उपशान्तमोहस्य प्रथमसमयानन्त-
रमेव मरणसंभवात् । उत्कर्षतोऽन्तर्मुहूर्त्तम्, निर्ग्रन्थाद्धाया एतत्प्रमाणत्वात् ॥ ८९ ॥ 'ण्हाओ' इति आयुष्कान्तिम-
मुहूर्त्ते केवलोत्पत्तौ अन्तर्मुहूर्त्तं जघन्यतः स्नातककालः स्यात् । उत्कर्षतः पूर्वाणां देशोना कोटिः, प्रत्येकं तेषां बहुस्थिति-
कत्वात् । बकुशादयः 'सर्वाद्धां' सर्वकालं भवन्ति ॥ ९० ॥ पुलाकादीनामेकत्वेन कालमानमुक्तम्, अथ पृथक्त्वेनाह–
निर्ग्रन्थाः पुलाकाश्च जघन्यत एकं समयं भवन्ति । कथम् ? एकस्य पुलाकस्य योऽन्तर्मुहूर्त्तकालस्तस्यान्तसमयेऽन्यः पुला-
कत्वं प्रतिपन्न इत्येवं जघन्यत्वविवक्षायां द्वयोः पुलाकयोरेकत्र समये सद्भावः । द्वित्वे च जघन्यं पृथक्त्वं स्यात् । उत्कर्ष-
तस्ते पुनः पुलाका अन्तर्मुहूर्त्तमेव । यद्यपि पुलाका उत्कर्षत एकदा सहस्रपृथक्त्वपरिमाणाः स्युस्तथापि अन्तर्मुहूर्त्तत्वा-

त्तदद्धायाः बहुत्वेऽपि तेषामन्तर्मुहूर्त्तमेव तत्कालः । केवलं बहूनां स्थितौ यदन्तर्मुहूर्त्तं तदेकपुलाकस्थित्यन्तर्मुहूर्त्तान्महत्तरमित्यवसेयम् । निर्ग्रन्थाः पुलाकवद्वाच्याः ॥ ९१ ॥ द्वारमेकोनत्रिंशत्तमम् ॥ २९ ॥

अंतोमुहुत्तमेसिं, जहन्नओ अंतरं तु पंचण्हं । उक्कोसेण अवड्ढं, पुग्गलपरियट्टदेसूणं ॥ ९२ ॥
ण्हायस्स अंतरं नो, समयं तु जहन्नओ पुलायाणं । संखिज्जगवासाई, उक्कोसगमंतरं तेसिं ॥ ९३ ॥
निग्गंथाणं समयं, उक्कोसं अंतरं तु छम्मासा । सेसाणं तु चउण्हं, नो चेव य अंतरं अत्थि ॥९४॥ दारं ३०॥

पुलाकादीनां पञ्चानां जघन्यतोऽन्तर्मुहूर्त्तमन्तरम् । उत्कर्षतोऽपार्द्धपुद्गलपरावर्त्तो देशोनः ॥ ९२ ॥ स्नातकस्यान्तरं नास्ति, प्रतिपाताभावात् । एकत्वापेक्षया पुलाकादीनामन्तरमुक्तम्, अथ पृथक्त्वेनाह—पुलाकानां जघन्यतोऽन्तरं समयः । उत्कर्षतः सङ्ख्येयवर्षाणि 'तेषां' पुलाकानाम् ॥ ९३ ॥ निर्ग्रन्थानां जघन्यतः समयस्, उत्कर्षतः षण्मासाः । बकुशप्रतिसेवाकषायकुशीलस्नातकानां नास्त्यन्तरं, महाविदेहे सदा सद्भावात् ॥ ९४ ॥ द्वारं त्रिंशत्तमम् ॥ ३० ॥

वेयणकसायमरणे, तिन्नि पुलायस्स हुंति समुघाया । पंचासेवगबउसे, वेउव्वियतेयगेहिं सह ॥ ९५ ॥
आहारएण सहिया, कसाइणो छन्नियंठए नत्थि । केवलियसमुग्घाओ, इक्कोवि य होइ ण्हायस्स॥दारं ३१॥

वेदनाकषायमरणसमुद्घातास्त्रयः पुलाकस्य चारित्रवतः संज्वलनकषायोदयसंभवे कषायसमुद्घातः स्यात् । तथा पुलाकस्य मरणाभावेऽपि मारणान्तिकसमुद्घातो न विरुद्धः, समुद्घातान्निवृत्तस्य कषायकुशीलत्वादिपरिणामे सति मर-

णभावात् । आसेवकबकुशयोः पञ्च वैक्रियतैजससमुद्घातसहिताः । कषायिणः आहारकसमुद्घातसहिताः षट् । निर्ग्रन्थस्य नास्ति समुद्घातः । स्नातकस्यैकः केवलिसमुद्घातः स्यात् ॥ ९५ ॥ ९६ ॥ द्वारमेकत्रिंशत्तमम् ॥ ३१ ॥

**लोगमसंखिज्जइमे, भागे पंचण्ह होइ ओगाहो । ण्हायस्स असंखिज्जे, असंखभागेसु लोए वा॥९७॥दारं ३२**

क्षेत्रमवगाहनाक्षेत्रम् । पुलाकादीनां पञ्चानां लोकस्यासङ्ख्येयभागेऽवगाहः, पुलाकादीनां शरीरस्य लोकासङ्ख्येयभागमात्रावगाहित्वात् । स्नातकः शरीरस्थो दण्डकपाटकरणकाले च लोकासङ्ख्येयभागवृत्तिः, केवलिशरीरादीनां तावन्मात्रत्वात् । मन्थकरणकाले बहोर्लोकस्य व्याप्तत्वेन स्तोकस्य चाव्याप्ततयोक्तत्वाल्लोकस्यासङ्ख्येयेषु भागेषु स्नातको वर्त्तते, लोकपूरणे च सर्वलोके वर्त्तते ॥ ९७ ॥ द्वारं द्वात्रिंशत्तमम् ॥ ३२ ॥

**एवं चेव य फुसणा, दारं ३३ । चउरो भावे खओवसमयम्मि ।**
**ण्हाओ खाइयभावे, उवसमि खइयम्मि वि नियंठो ॥ ९८ ॥ दारं ३४ ॥**

स्पर्शना क्षेत्रवत् । नवरं, किञ्चिदधिका, पार्श्ववर्त्तिप्रदेशस्पर्शनात् ॥ द्वारं त्रयस्त्रिंशत्तमम् ३३ ॥ आद्याश्चत्वारः क्षायोपशमिकभावे । स्नातकः क्षायिके । निर्ग्रन्थ औपशमिके क्षायिके वा ॥ ९८ ॥ द्वारं चतुस्त्रिंशत्तमम् ३४ ॥

**पडिवज्जंत पुलाया, इक्काई जाव सयपुहुत्तं ति । पडिवन्ना जइ हुंती, सहसपुहुत्तंतएगाई ॥ ९९ ॥**
**सेविबउसा पवज्जंतगा य इक्काइ जा सयपुहुत्तं । पडिवन्नगा जहन्नग, इयरे कोडीसयपुहुत्तं ॥ १०० ॥**

सकसाया इक्काई, सहसपुहुत्तं सिया पवज्जंता । कोडीसहसपुहुत्तं, उक्कोस जहन्नग पवन्ना ॥ १०१ ॥
पडिवज्जंतनियंठा, इक्काई जा सयं तु बासट्ठं । अट्ठसयं खवगाणं, उवसमगाणं तु चउवन्ना ॥ १०२ ॥
पुव्वपवन्ना जइ ते, इक्काई हुंति जा सयपुहुत्तं । ण्हाया उ पवज्जंता, अट्ठसयं जाव समयम्मि ॥ १०३ ॥
पुव्वपवन्नसिणाया, कोडिपुहुत्ते जहन्नया हुंति । उक्कोसा चेवं चिय, परिमाणमिमेसि एवं तु ॥ दारं ३५ ॥

पुलाकाः प्रतिपद्यमाना एकादयः शतपृथक्त्वं यावत् स्युः । पूर्वप्रतिपन्नाः सहस्रपृथक्त्वं एकादयः ॥ ९९ ॥ बकुशासेविनः प्रतिपद्यमाना एकादयः शतपृथक्त्वं यावत् । पूर्वप्रतिपन्ना जघन्यत उत्कर्षतश्च कोटीशतपृथक्त्वम् ॥ १०० ॥ कषायिणः प्रतिपद्यमाना एकादयः सहस्रपृथक्त्वं यावत् । पूर्वप्रतिपन्ना कोटीसहस्रपृथक्त्वम् ॥ १०१ ॥ निर्ग्रन्थाः प्रतिपद्यमाना एकादयो यावद्द्वाषष्टिशतम् । क्षपकानामष्टशतम् । औपशमिकाश्चतुष्पञ्चाशत् । पूर्वप्रतिपन्नाः शतपृथक्त्वम् । स्नातकाः प्रतिपद्यमाना अष्टशतम् । पूर्वप्रतिपन्नाः कोटिपृथक्त्वम् ॥ १०२ ॥ १०३ ॥ १०४ ॥ द्वारं पञ्चत्रिंशत्तमम् ३५ ॥

निग्गंथपुलयण्हाया, बउसा पडिसेवगा कसाइल्ला । थोवा संखिज्जगुणा, जहुत्तरं ते विणिद्दिट्ठा ॥ दारं ३६ ॥

निर्ग्रन्थाः सर्वस्तोकाः, उत्कर्षतः शतपृथक्त्वप्रमाणत्वात् । पुलाकाः सङ्ख्येयगुणाः, तेषां सहस्रपृथक्त्वात् । तेभ्यः स्नातकाः सङ्ख्येयगुणाः, कोटीपृथक्त्वमानत्वात् । तेभ्यो बकुशाः सङ्ख्येयगुणाः, कोटीशतपृथक्त्वात्तेषाम् । तेभ्यः प्रतिसेवाकुशीलाः सङ्ख्येयगुणाः । कथमेतत् तेषामपि कोटीशतपृथक्त्वस्योक्तत्वात् ? सत्यम्, किन्तु बकुशानां यत् कोटीशत-

पृथक्त्वं तद्द्वित्रादिकोटीशतमानम्, प्रतिसेवाकुशीलानां कोटीशतपृथक्त्वं चतुष्कोटीशतमानमिति न विरोधः । तेभ्यः कषायिणः सङ्ख्येयगुणाः, कोटीसहस्रपृथक्त्वात्तेषाम् ॥ १०५ ॥ द्वारं षट्त्रिंशत्तमम् ३६ ॥

भगवइपणवीससयस्स छट्ठउद्देसगस्स संगहणी । एसा उ नियंठाणं, रइया भावत्थसरणत्थं ॥ १०६ ॥

॥ इति श्रीमदभयदेवसूरिसंकलिता पञ्चनिर्ग्रन्थी ॥

## ॥ सावचूरिका श्रीमदभयदेवसूरिकृता पञ्चनिर्ग्रन्थी ॥

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

श्रीमदभयदेवसूरिरचिता

# प्रज्ञापनोपाङ्गतृतीयपदसंग्रहणी ।

( अवचूरिभूषिता )

दिसि १ गइ २ इंदिय ३ काए ४ जोए ५ वेए ६ कसाय ७ लेसा य ।
सम्मत्त ९ नाण १० दंसण ११ संजम १२ उवओग १३ आहारे १४ ॥ १ ॥
भासग १५ परित्त १६ पज्जत्त १७ सुहुम १८ सन्नी १९ भ॑वि २० ऽत्थिए २१ चरिमे २२ ।
जीवे य २३ खित्त २४ बंधे २५ पुग्गल २६ महदंडए २७ चेव ॥ २ ॥

---

१ 'भव' इत्यपि ।

जोयणकोडी उण संखया उ विक्खंभदीहरत्तेहिं । माणससरत्थि दीवंमि बाहिरे उत्तराइ तहा ॥ ८ ॥
एवं जलत्रणविगला तेरिच्छिपणिंदिया य बोधव्वा । सव्वेसिमेसिमेवं पभूयउप्पायसंभवओ ॥ ९ ॥
जम्माइ पुढवि थोवा विसेसअहिया उ होइ उत्तरओ । तत्तो वि हु पुव्वेणं तत्तो वि य होइ पच्छिमओ॥१०॥
सुसिरे थोवा पुढवी घणंमि बहुग त्ति तेण दाहिणओ । भवणाणं बहुयत्ता उत्तरओ भवणथोवत्ता ॥ ११ ॥

संख्येययोजनेषु द्वीपेषु मध्ये कस्मिंश्चिद्द्वीपे ॥ ८ ॥ दक्षिणस्यां बहूनि भवनपतीनां भवनानि बहवो नरकावासास्ततः शुषिरप्राभूत्यम् ॥ ११ ॥

चंदाइदीवभावा पुव्वाए पच्छिमे वि तब्भावा । गोयमदीवो य तहा पुढवि जहुत्ता भवे एवं ॥ १२ ॥

यावन्तो रविशशिद्वीपाः पूर्वस्यां दिशि तावन्तः पश्चिमायामपि तत एतावता साम्यम्, परं लवणसमुद्रे गौतमद्वीपः पश्चिमायामधिकोऽस्ति, तेन विशेषाधिकाः । ननु यथा पश्चिमायां गौतमद्वीपोऽभ्यधिकः समस्ति तथा तस्यामधोलौकिकग्रामा अपि योजनसहस्रावगाहाः सन्ति, ततः खातपूरितन्यायेन तत्र तुल्या एव पृथिवीकायिकाः प्राप्नुवन्ति न विशे-

---

१ संख्येययोजनकोटाकोटीप्रमाणमित्यर्थः । २ 'पुण' इत्यपि । ३ इतोऽग्रे क्वचित्पुस्तके—"आयामविष्कम्भाभ्या संख्येययोजनकोटीप्रमाणं मानसनाम सरोऽस्ति" इत्यधिकम् । ४ क्वचित्—"प्राभूत्यसंभवादकं स्तोकम्" इत्यधिकम् ।

षाधिकाः । नैवम्, यथाऽधोलौकिकग्रामावगाहो योजनसहस्रम्, गौतमद्वीपस्य पुनः पद्सप्तत्यधिकं योजनसहस्रमुच्चैस्त्वम् ।
विष्कम्भस्तस्य द्वादशयोजनसहस्राणि, ततो यद्यधोलौकिकग्रामच्छिद्रेषु बुद्ध्या गौतमद्वीपः प्रक्षिप्यते तथापि समधिक एव
प्राप्यते न तुल्य इति ॥ १२ ॥

**पुव्वाए संखगुणा अवरेणं पुण विसेसहिया॥१३**

**तेऊ १ मणुया २ सिद्धा ३ उत्तर १ जम्मासु २ हुंति थोव त्ति। पुव्वाए संखगुणा अवरेणं पुण विसेसहिया॥ १३**
**भरहाइसु खित्तस्सप्पभावओ ते उ ता थोवं ॥ १४ ॥**
**पायारंभा मणुया ते पुण थोवा दिसादुगे हुंति । भरहाइसु खित्तस्सप्पभावओ ते उ ता थोवं ॥**

'तेऊ' सुगमा ॥ १३ ॥ दक्षिणस्यां पञ्चसु भरतेषु उत्तरस्यां पञ्चस्वैरवतेषु क्षेत्रस्याल्पत्वात् स्तोका मनुष्याः, तेषां स्तोक-
त्वेन तेजस्कायिका अपि स्तोका अल्पपाकारम्भसंभवात् । ततः स्तोका दक्षिणोत्तरयोर्दिशोस्तेजस्कायिकाः । स्वस्थाने
तु प्रायः समानाः ॥ १४ ॥

**खित्तबहुत्तेण विदेहवासिणो हुंति बहुतरा पुरिसा । अवरेण अहोलोइयगामेसु बहुत्तमा हुंति ॥ १५ ॥**
**तम्हा तेऊ मणुया सिद्धा वि हु हुंति भणियपरिमाणा। मणुयगईए सिद्धा हवंति जं तेण मणुयसमा॥१६॥**

इह मनुष्या एव सिध्यन्ति नान्ये । मनुष्या अपि सिध्यन्तो येष्वाकाशप्रदेशेष्विह चरमसमयेऽवगाढास्तेष्वेवाकाश-
प्रदेशेषूर्ध्वमपि गच्छन्ति तेष्वेव चोपर्यवतिष्ठन्ते, न मनागपि वक्रं गच्छन्ति सिध्यन्ति वा, इत्यतो मनुष्यसमत्वं सिद्धा-
नामल्पबहुत्वमाश्रित्य । अयमर्थः—यस्यां दिशि मनुष्याः स्तोकास्तस्यां सिद्धा अपि स्तोकाः, यस्यां दिशि मनुष्या अधि-

कास्तस्यां सिद्धा अप्यधिकाः ॥ १६ ॥

वाऊ १ वंतरदेवा २ पुव्वेण १ ऽवरेण २ उत्तरेणं ३ तु ।
दाहिणओ ४ य कमेणं थोवा १ बहु २ बहुग ३ बहुग ४ त्ति ॥ १७ ॥

सुसिरंमि होइ वाऊ घणंमि सो नत्थि तेण पुव्वाए। सुसिरअभावा वाऊ थोवो तह वंतरसुरा य ॥ १८॥
अवराइ विसेसहिओ अहलोइयगामसंभवा वाऊ । तत्तो वि उत्तराए भवणच्छिड्डाण बहुयत्ता ॥ १९ ॥
तत्तो वि दाहिणेणं बहुतरओ भवणछिड्डबहुयत्ता । दाहिणभवणाणि जओ बहुयाइं उत्तरेहिंतो ॥२०॥

उत्तरदिगपेक्षया दक्षिणस्यां निकाये निकाये चतुश्चतुर्लक्षभवनानां नरकावासानां चाधिकत्वात् बहूनां कृष्णपाक्षिकाणां जीवानां तत्रोत्पद्यमानत्वात्। तथा यत्र शुषिरं तत्र व्यन्तराः प्रचरन्ति, यत्र घनं तत्र न, इति तेऽपि यथोक्ता ज्ञातव्याः ॥१७-२०

नेरइया अइथोवा दिसातिए हुंति दाहिणेण पुणो । अस्संखगुणा तत्तो एवं चिय बंभलोयसुरा ॥ २१ ॥

सर्वस्तोकाः पूर्वोत्तरपश्चिमदिक्त्रये नैरयिकाः, पुष्पावकीर्णनरकावासानां तत्राल्पत्वात् बहूनां प्रायः सङ्ख्येययोजनविस्तृतत्वाच्च । तेभ्यो दक्षिणदिग्भाविनोऽसङ्ख्येयगुणाः, पुष्पावकीर्णनरकावासानां तत्र बाहुल्यात् तेषां च प्रायोऽसङ्ख्येययोजनविस्तृतत्वात् कृष्णपाक्षिकाणां तस्यां दिशि प्राचुर्येणोत्पादाच्च। तथाहि—द्विविधा जन्तवः कृष्णपाक्षिकाः शुक्लपाक्षिकाश्च । उक्तं च—"जेसिमवड्ढो पुग्गलपरियट्टो सेसओ य संसारो । ते सुक्कपक्खिया खलु अहिए पुण किण्हपक्खीओ" ॥ १ ॥ एवं

ब्रह्मलोकसुरा अपि । यतः कृष्णपाक्षिकतिर्यग्योनीनां बहुत्वात् दिक्त्रयोत्पदिष्णुशुक्लपाक्षिकाणां स्तोकत्वात् ॥ २१ ॥ नैरयिकाणां सामान्यतो दिग्विभागेनाल्पबहुत्वमुक्तम् । अथ सप्तम्यादिपृथिवीविभागेनाह—

**अहसत्तमाइ दिसितियनेरइएहिं तओ असंखगुणा । दाहिणओ तेहिंतो छट्ठीइ दिसातिउप्पन्ना ॥ २२ ॥**
**तेहिंतो दाहिणया असंखगुणिया उ हुंति छट्ठीए । एएणेव कमेणं सव्वासु वि जाव रयणपहा ॥ २३ ॥**

अधःसप्तमपृथिव्यां पूर्वोत्तरपश्चिमदिग्भाविनैरयिकेभ्यो दाक्षिणत्या असङ्ख्येयगुणाः । तेभ्यः षष्ठपृथिवीपूर्वोत्तरपश्चिमनैरयिका असङ्ख्येयगुणाः । कथम् ? सर्वोत्कृष्टपापकारिणः संज्ञिपञ्चेन्द्रियतिर्यग्मनुष्याः सप्तमपृथिव्यामुत्पद्यन्ते, किञ्चिद्धीनहीनतरपापकारिणश्च षष्ठ्यादिषु सर्वोत्कृष्टपापकारिणश्च स्तोकाः, बहवश्च हीनहीनतरपापकारिणः । ततो युक्तमसङ्ख्येयगुणत्वं सप्तमपृथिवीदाक्षिणात्यनारकेभ्यः षष्ठपृथिव्यां दिक्त्रयभाविनारकाणाम् । एवमुत्तरोत्तरपृथिवीरधिकृत्य भावयितव्यम् ॥ २२ ॥ २३ ॥

**दाहिणया नेरइया असंखगुणिया य थोवया अण्णे । ते पावाओ तह किन्हपक्खियत्तेण जं हुंति ॥२४॥**

कृष्णपाक्षिका दीर्घतरसंसारभाजिन उच्यन्ते । दीर्घतरसंसारभाजिनश्च बहुपापोदयाः स्युः । ते च क्रूरकर्माणः । ते च प्रायस्तथास्वाभाव्यात् तद्भवसिद्धिका अपि दक्षिणस्यां दिशि समुत्पद्यन्ते न शेषासु दिक्षु । यदुक्तम्—"पायमिह क्रूरकम्मा भवसिद्धीयावि दाहिणिल्लेसु । नेरइयतिरियमणुयासुराइठाणेसु गच्छंति ॥ १ ॥" ततो दक्षिणस्यां बहूनां कृष्णपाक्षिकाणामुत्पादात्पूर्वोक्तकारणद्वयाच्च संभवन्ति पूर्वोत्तरपश्चिमदिग्भाविभ्यो दाक्षिणात्या असङ्ख्येयगुणाः ॥ २४ ॥

तेह किन्हपक्खतिरिया उववज्जे दाहिणेण ते बहुया । इयरा उत्तरओ तो जहउत्ता बंभलोयसुरा ॥२५॥

ब्रह्मलोककल्पे सर्वस्तोकाः पूर्वोत्तरपश्चिमदिग्भाविनो देवाः, यतो बहवः कृष्णपाक्षिकास्तिर्यग्योनयो दक्षिणस्यामुत्पद्यन्ते, शुक्लपाक्षिकाश्च स्तोका इति शेषदिक्त्रयभाविनः स्तोकाः । तेभ्यो दक्षिणस्यां सङ्ख्येयगुणाः ॥ २५ ॥

भवणवई १ सोहम्मा २ थोवा पुव्वावरेण उत्तरओ ।
अस्संखा दाहिणओ कमसोऽसंखिज्ज १ अहिया २ य ॥ २६ ॥

पुव्वावरासु भवणा थोवा बहुया उ उत्तराइ तओ । दाहिणओ बहुतरया भवणवई तो जेहुत्त त्ति ॥२७॥
आवलियठिया तुल्ला सव्वदिसासुं सुहम्मसुरभवणा । पुप्फावकिन्नगा पुण बहुतरया दाहिणुत्तरओ ॥२८॥
तेण जहुत्ता देवा सोहंमा जं पुणित्थ दाहिणओ । अहिगयरत्ती तं पुण दाहिणगामि त्ति किण्हजिया ॥२९॥

आवलिकाप्रविष्टानि विमानानि चतसृष्वपि दिक्षु तुल्यानि । यानि पुनः पुष्पावकीर्णानि तानि प्रभूतान्यसङ्ख्येययोजनविस्तृतानि । तानि च दक्षिणस्यामुत्तरस्यां च नान्यत्र । ततः सर्वस्तोकाः पूर्वापरभाविनः सौधर्मदेवाः । तेभ्य उत्तरस्यामसङ्ख्येयगुणाः, असङ्ख्येययोजनविस्तृतपुष्पावकीर्णानां बाहुल्यात् । तेभ्यो दक्षिणस्यां विशेषाधिकाः, कृष्णपाक्षिकाणां प्राचुर्येण तत्र गमनात् । भवनपतयोऽप्युत्तराभाविभ्यो दक्षिणस्यामङ्ख्येयगुणाः, तत्र भवनानामतीवबाहुल्यात् ।

१ "जं किण्हप०"इत्यपि पाठः । २ "जहन्नु त्ति—जुहुत्तु त्ति"इत्यपि पाठः ।

यतस्तत्र प्रतिनिकायं चत्वारि चत्वारि भवनानां लक्षाण्यतिरिच्यन्ते कृष्णपाक्षिकाणां बहूनां तत्रोत्पादाच्च । अतः क्रमशो
भवनपतिसौधर्मा उत्तराभाविभ्यो दक्षिणस्यामसङ्ख्येया अधिकाश्च भवन्ति ॥ २६–२९ ॥

पुव्वावरासु थोवा जोइसिया दाहिणे विसेसहिया । तत्तो विसेसअहिया उत्तरओ हुंति जोइसिया ॥३०॥
जोइसिया दाहिणओ बहुतरगा किण्हपक्खिउप्पाया । माणससरम्मि कीडत्थमागया उत्तरि त्ति बहू ॥३१॥
उप्पाया उ तदुब्भवविहियनियाणाण मच्छजीवाण । पुव्वावरासु ते पुण अइथेवा पारिसेसा उ ॥ ३२ ॥

सर्वस्तोका ज्योतिष्काः पूर्वस्यामपरस्यां च, चन्द्रादित्यद्वीपेषूद्यानकल्पेषु कतिपयानामेव तेषां भावात् । तेभ्योऽपि दक्षिणस्यां विशेषाधिकाः, विमानबाहुल्यात्कृष्णपाक्षिकाणां तद्दिग्भावित्वाच्च । तेभ्योऽप्युत्तरस्यां विशेषाधिकाः, यतो मानसे सरसि बहवो ज्योतिष्काः क्रीडाव्यावृत्ता नित्यमासते, मानससरसि च ये मत्स्यादयो जलजरास्ते आसन्नविमान-दर्शनतः समुत्पन्नजातिस्मरणाः किञ्चिद्व्रतं प्रतिपद्यानशनादि च कृत्वा कृतनिदानास्तत्रोत्पद्यन्ते ॥ ३०–३२ ॥

सोहंमे इव तदुवरि तिगंमि बंभे व जा सहस्सारो । तेण परं जे देवा बहुसम उववन्नया ते उ ॥ ३३ ॥
उप्पज्जंति नरा एव जेण तेसुं ति तो जहुत्ता ते । उक्कमभणणं पुढवाइयाणमिह लाघवत्थि त्ति ॥३४॥ दारं १॥

सौधर्म इव तदुपरि त्रिके ईशानसनत्कुमारमाहेन्द्ररूपे भावना । ब्रह्मलोक इव लान्तकशुक्रसहस्रारेषु भावना कार्या ॥३३॥ ततः परमानतादिषु पुनर्मनुष्या एवोत्पद्यन्ते तेन प्रतिकल्पं प्रतिग्रैवेयकं प्रत्यनुत्तरविमानं च चतसृषु दिक्षु प्रायो बहुसमा

वेदितव्याः । क्रमस्तु पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियनरकसप्तमपृथिवीपञ्चेन्द्रियतिर्यग्मनुष्यभवनपतिव्यन्तर-ज्योतिष्कसौधर्मादिदेवसिद्धरूपः प्रज्ञापनातृतीयपदोक्तः ॥ ३४ ॥ द्वारम् १ ॥

नर १ नेरइया २ देवा ३ सिद्धा ४ तिरिया ५ जहुत्तरं नेया ।
थोवा १ दुन्नि ३ असंखा अणंतगुणिया ४ अणंतगुणा ५ ॥ ३५ ॥

सर्वस्तोका मनुष्याः, पण्णवतिच्छेदनकछेद्यराशिप्रमाणत्वात् १ । तेभ्यो नैरयिका असङ्ख्येयगुणाः, अङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनि प्रथमवर्गमूले द्वितीयवर्गमूलेन गुणिते यावान्प्रदेशराशिर्भवति तावत्प्रमाणासु घनीकृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणत्वात् २ । तेभ्यो देवा असङ्ख्येयगुणाः, व्यन्तराणां ज्योतिष्काणां च प्रत्येकं प्रतरासङ्ख्येयभागवर्तिश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात् ३ । तेभ्यः सिद्धा अनन्तगुणाः, अभव्येभ्योऽनन्तगुणत्वात् ४ । तेभ्यस्तिर्यग्योनिका अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात् ५ ॥ ३५ ॥

नारी १ नर २ नेरइया ३ तेरिक्खी ४ सुर ५ सुरी ६ सिवा ७ तिरिया ८ ।
थोवा १ चउर ५ असंखा संखगुणा ६ दो ८ अणंतगुणा ॥ ३६ ॥
नारीण असंखगुणा मणुया जं वन्निया तदित्थमहो ।
संमुच्छिमगहणाओ न विवक्खा संढवेयंमि ॥ ३७ ॥ दारं २ ॥

नार्यो मनुष्यस्त्रियः स्तोकाः, सङ्ख्येयकोटीकोटीप्रमाणत्वात् १। ताभ्यो 'नर'इति मनुष्या अङ्ख्येयगुणाः। इह मनुष्या इति संमूर्च्छनजा अपि गृह्यन्ते, वेदस्याविवक्षणात्। ते च संमूर्च्छनजा वान्तादिषु नगरनिर्द्धमनान्तेषु जायमाना असङ्ख्येयगुणाः प्राप्यन्ते २। तेभ्यो नैरयिका असङ्ख्येयगुणाः, मनुष्या ह्युत्कृष्टपदेऽपि श्रेण्यसङ्ख्येयभागगतप्रदेशराशिप्रमाणा लभ्यन्ते। नैरयिकास्त्वङ्गुलमात्रक्षेत्रप्रदेशराशिसत्कतृतीयवर्गमूलगुणितप्रथमवर्गमूलप्रमाणश्रेणिगताकाशप्रदेशराशिप्रमाणाः, अतो भवन्त्यसङ्ख्येयगुणाः ३। तेभ्यस्तिर्यक्स्त्रियोऽसङ्ख्येयगुणाः, प्रतरासङ्ख्येयभागवर्त्त्यसङ्ख्येयश्रेणिनभःप्रदेशराशिप्रमाणत्वात् ४। तेभ्योऽपि देवा असङ्ख्येयगुणाः, प्रतरासङ्ख्येयभागवर्त्त्यसङ्ख्येयश्रेणिगतप्रदेशराशिमानत्वात् ५। तेभ्योऽपि देव्यः सङ्ख्येयगुणाः, द्वात्रिंशद्गुणत्वात् ६। ताभ्यः 'सिवा' इति सिद्धा अनन्तगुणाः, अभव्यानन्तगुणत्वात् ७। तेभ्योऽपि तिर्यग्योनिका अनन्तगुणाः ॥ ३६ ॥ ३७ ॥ द्वारं २ ॥

**पण १ चउ २ ति ३ दु ४ अक्खाणिंदिया ५ य एगिंदिया ६ य सिंदियया ७।**
**थोवा १ तिन्नि ४ समहिया दुन्नि ६ अणंता विसेसहिया ७ ॥ ३८ ॥**
**एगिंदिएसु सेसगपक्खेवा सिंदिया विसेसहिया। सह इंदिएहिं जम्हा सइंदिया ते अ संवजिआ[1] ॥ ३९॥**

सर्वस्तोकाः पञ्चेन्द्रियाः, सङ्ख्येययोजनकोटीकोटीप्रमाणविष्कम्भसूचीप्रमितायाः प्रतरासङ्ख्येयभागवर्त्तिन्योऽसङ्ख्येयश्रेण्यस्तद्गताकाशप्रदेशराशिप्रमाणत्वात् १। तेभ्यश्चतुरिन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूतसङ्ख्येययोजनको-

---

१ सिद्धवर्जाः इत्यर्थः ॥

टीकोटीप्रमाणत्वात् २ । तेभ्योऽपि त्रीन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूततरसङ्ख्येययोजनकोटीकोटीमानत्वात् ३ । तेभ्योऽपि द्वीन्द्रिया विशेषाधिकाः, तद्विष्कम्भसूच्याः प्रभूततमसङ्ख्येययोजनकोटीकोटीमानत्वात् ४ । तेभ्योऽनिन्द्रिया अनन्तगुणाः, सिद्धानामनन्तत्वात् ५ । तेभ्योऽप्येकेन्द्रिया अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात् ६ । तेभ्यः सेन्द्रिया विशेषाधिकाः, द्वीन्द्रियादीनामपि तत्र प्रक्षेपात् ७ ॥ ३८ ॥ ३९ ॥

**पज्जत्ता चउकरणा थोवा पंचिंदिया विसेसहिया । बेइंदिया उ तत्तो तत्तो तेइंदिया अहिया ॥ ४० ॥**

सर्वस्तोकाश्चतुरिन्द्रियाः पर्याप्ताः, यतस्तेऽल्पायुषोऽतः प्रभूतकालमवस्थानाभावात् पृच्छासमये स्तोका अवाप्यन्ते । ते च प्रतरे यावन्त्यङ्गुलसङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणा ज्ञातव्याः । तेभ्यः पञ्चेन्द्रियाः पर्याप्ता विशेषाधिकाः, प्रभूतप्रतराङ्गुलसङ्ख्येयभागमात्रखण्डप्रमाणत्वात् । तेभ्योऽपि द्वीन्द्रियाः पर्याप्ता विशेषाधिकाः, प्रभूततरप्रतराङ्गुलसङ्ख्येयभागखण्डमानत्वात् । तेभ्योऽपि त्रीन्द्रियाः पर्याप्ता विशेषाधिकाः, स्वभावत एव प्रभूततमप्रतराङ्गुलसङ्ख्येयभागखण्डमानत्वात् ४०

**तेहिंतो पंचक्खा असंखगुणिया भवंत पज्जत्ता । चउकरण विसेसहिया तत्तो तिकरण दुकरणा य ॥ ४१ ॥**

ततस्त्रीन्द्रियपर्याप्तेभ्योऽपर्याप्ताः पञ्चेन्द्रिया असङ्ख्येयगुणाः, एकस्मिन् प्रतरे यावन्त्यङ्गुलासङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणत्वात् । तेभ्योऽपर्याप्तचतुरिन्द्रियाः, तेभ्यस्त्रीन्द्रिया अपर्याप्ताः, तेभ्योऽपर्याप्ता द्वीन्द्रियाः यथोत्तरं विशेषाधिका वाच्याः; प्रभूतप्रभूततरप्रभूततमप्रतराङ्गुलासङ्ख्येयभागखण्डप्रमाणत्वात् ॥ ४१ ॥

एगक्ख अपज्जत्ता अणंतगुण सिंदिया य तेहहिया। पज्जत्ता एगक्खा संखिज्जा सिंदिआ अहिया ॥ ४२ ॥

तेभ्य एकेन्द्रिया अपर्याप्ता अनन्तगुणाः, वनस्पतिकायिकानामपर्याप्तानामनन्ततया सदा प्राप्यमाणत्वात्। तेभ्यः सेन्द्रिया अपर्याप्ता विशेषाधिकाः, द्वीन्द्रियादीनामप्यपर्याप्तानां तत्र प्रक्षेपात्। तेभ्यः पर्याप्ता एकेन्द्रियाः सङ्ख्येयगुणाः। तेभ्यः सेन्द्रियाः पर्याप्ता विशेषाधिकाः ॥ ४२ ॥ एतद्गाथात्रयोक्तभावनाय गाथाचतुष्कमाह—

अप्पाउ चउकरणा पज्जत्ता ते चिरं न जीवंति। तेण पणिंदियपज्जत्तयाण थेव त्ति ते भणिया ॥ ४३ ॥
तेइंदियाण ते पुण थोवा बेइंदिय त्ति पज्जत्ता। तत्थ न वुत्ता जुत्ती वित्तीकारेण किं भणिमो ॥ ४४ ॥
एगिंदिय अपज्जत्ता थोवा पज्जत्तया य संखगुणा। सुहुमे पडुच्च एयं इयरे बहुया अपज्जत्ता ॥ ४५ ॥
जं भणियं पज्जत्तयनिस्साए वक्कमंतपज्जत्ता। जत्थेगो पज्जत्तो तत्थ असंखा अपज्जत्ता ॥ ४६ ॥ दारं ३ ॥

थोवा १ य असंखगुणा २ तिन्नि य अहिया ५ अणंत ७ दो अहिया।
तस १ तेउ २ पुढवि ३ आऊ ४ वाउ ५ अकाया ६ तरु ७ सकाया ८ ॥ ४७ ॥

सर्वस्तोकास्त्रसकायिकाः, द्वीन्द्रियादीनामेव त्रसकायिकत्वात्, तेषां च शेषकायापेक्षयाऽत्यल्पत्वात् १। तेभ्यस्तेजस्कायिका असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात् २। तेभ्यः पृथिवीकायिकाः, तेभ्योऽप्कायिकाः, तेभ्यो वायुकायिका यथोत्तरं प्रभूतप्रभूततरप्रभूततमासङ्ख्येयलोकाकाशप्रदेशमानत्वाद्विशेषाधिकाः ५। तेभ्योऽकायिका अनन्तगुणाः,

सिद्धानामनन्तत्वात् ६। तेभ्यो वनस्पतिकायिका अनन्तगुणाः, अनन्तलोकाकाशप्रदेशराशिमानत्वात् ७। तेभ्यः सकायिका विशेषाधिकाः, पृथिव्यादीनामपि तत्र प्रक्षेपात् ८ ॥४७॥ ओघेनोक्तं कायिकानामल्पबहुत्वम्। इदानीं विशेषेणाह—

थोवा तेऊ बायर पज्जत्ता १ ते तओ त एव तसा २। अपज्जत्ता य तसा ३ पज्जत्ता तह परित्ततरू ४ ॥ ४८ ॥

निग्गोय ५ भू ६ जला ७ निल ८ अप्पज्जत्तागणी ९ परित्ततरू १०।
निग्गोय ११ भू १२ जला १३ निल १४ सुहुमाऽगणिणो १५ असंखगुणा ॥ ४९ ॥

तत्तो य अपज्जत्ता सुहुमा भू १६ जल १७ समीरणा १८ अहिया।
तेऊ पज्जत्ता संखगुणा १९ भू २० जल २१ निला २२ अहिया ॥ ५० ॥

अप्पज्जत्त निगोया २३ असंखगुणिया[1] त एव पज्जत्ता २४।
संखिज्जगुणा बायरपज्जत्त वणा २५ अणंतगुणा ॥ ५१ ॥

बायरपज्जत्त जिया २६ अहिया तरु २७ बायरा अपज्जत्ता।
अस्संखगुणा बायरअप्पज्जत्ता जिया २८ अहिया ॥ ५२ ॥

---

१ "अस्संखगुणा" इत्यपि ॥

सुहुमा असंख सुहुमा ३० ऽहिया अपज्जत्ता ।

तरु २९ अपजत्ता सुहुमा असंख सुहुमा ३० ऽहिया अपज्जत्ता ।

सुहुमा तरु ३१ पज्जत्ता संखाहिय सुहुम ३२ पज्जत्ता ॥ ५३ ॥ दारं ४ ॥

सर्वस्तोका बादरतेजस्कायिकाः पर्याप्ताः, आवलिकासमयवर्गे कतिपयसमयन्यूनैरावलिकासमयैर्गुणिते यावान् समय-राशिस्तावत्प्रमाणत्वात् तेषाम् १ । तेभ्यो बादरत्रसकायिकाः पर्याप्ता असङ्ख्येयगुणाः, प्रतरे यावन्त्यङ्गुलसङ्ख्येयभागमा-त्राणि खण्डानि तावत्प्रमाणत्वात्तेषाम् २ । तेभ्यो बादरत्रसकायिका अपर्याप्ता असङ्ख्येयगुणाः, प्रतरे यावन्त्यङ्गुलासङ्ख्ये-यभागमात्राणि खण्डानि तावत्प्रमाणत्वात्तेषाम् ३ । ततः प्रत्येकबादरवनस्पतिकायिकाः ४ बादरनिगोदाः ५ बादरपृथि-वीकायिकाः ६ बादराप्कायिकाः ७ बादरवायुकायिकाः ८ पर्याप्ता यथोत्तरमसङ्ख्येयगुणाः । यद्यप्येते प्रत्येकं प्रतरे याव-न्त्यङ्गुलासङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणास्तथाप्यङ्गुलासङ्ख्येयभागस्यासङ्ख्येयभेदभिन्नत्वादित्थं यथोत्तरमसङ्ख्येयगुण-त्वमभिधीयमानं न विरुध्यते ८ । तेभ्यो बादरतेजस्कायिका अपर्याप्ता असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाण त्वात् ९ । ततः प्रत्येकशरीरबादरवनस्पतिकायिकाः १० बादरनिगोदाः ११ बादरपृथिवीकायिकाः १२ बादराप्कायिकाः १३ बादरवायुकायिकाः १४ अपर्याप्ता यथोत्तरमसङ्ख्येयगुणाः । ततो बादरवायुकायिकेभ्योऽपर्याप्तेभ्यः सूक्ष्मतेजस्का-यिका अपर्याप्ता असङ्ख्येयगुणाः १५ । ततः सूक्ष्मपृथिवीकायिकाः १६ सूक्ष्माप्कायिकाः १७ सूक्ष्मवायुकायिकाः १८ अपर्याप्ता यथोत्तरं विशेषाधिकाः । ततः सूक्ष्माः पर्याप्तास्तेजस्कायिकाः सङ्ख्येयगुणाः, सूक्ष्मेष्वपर्याप्तेभ्यः पर्याप्तानामोघत एव सङ्ख्येयगुणत्वात् १९ । ततः सूक्ष्मपृथिवीकायिकाः २० सूक्ष्माप्कायिकाः २१ सूक्ष्मवायुकायिकाः २२ पर्याप्ता यथो-

त्तरं विशेषाधिकाः । तेभ्यः सूक्ष्मनिगोदा अपर्याप्ता असङ्ख्येयगुणाः, तेषामपि प्राभूत्येन लोके सर्वस्मिन् भावात् २३ । तेभ्यः सूक्ष्मनिगोदाः पर्याप्तकाः सङ्ख्येयगुणाः, सूक्ष्मेष्वपर्याप्तेभ्यः पर्याप्तानामोघत एव सदा सङ्ख्येयगुणत्वात् । एते च बादरापर्याप्ततेजस्कायिकादयः पर्याप्तसूक्ष्मनिगोदपर्यवसानाः षोडश पदार्था यद्यप्यन्यत्राविशेषेणासङ्ख्येयलोकाकाशप्रदेशप्रमाणतया संगीयन्ते, तथाप्यसङ्ख्येयत्वस्यासङ्ख्येयभेदभिन्नत्वादित्थमसङ्ख्येयगुणत्वं विशेषाधिकत्वं सङ्ख्येयगुणत्वं विशेषाधिकत्वमसङ्ख्येयगुणत्वं सङ्ख्येयगुणत्वं प्रतिपाद्यमानं न विरोधभागिति २४ । तेभ्यः पर्याप्तसूक्ष्मनिगोदेभ्यो बादरनवस्पतिकायिकाः पर्याप्ता अनन्तगुणाः, प्रतिबादरैकैकनिगोदमनन्तजीवानां भावात् २५ । तेभ्यः सामान्यतो बादरपर्याप्ता विशेषाधिकाः, बादरपर्याप्ततेजस्कायिकादीनामपि तत्र प्रक्षेपात् २६ । तेभ्यो बादरवनस्पतिकायिका अपर्याप्तका असङ्ख्येयगुणाः, एकैकपर्याप्तबादरनिगोदनिश्रयाऽसङ्ख्येयानां बादरनिगोदापर्याप्तानामुत्पादात् २७ । तेभ्यः सामान्यतो बादरापर्याप्तका विशेषाधिकाः, बादरतेजस्कायिकादीनामप्यपर्याप्तानां तत्र प्रक्षेपात् २८ । तेभ्यः सामान्यतो बादरा विशेषाधिकाः, पर्याप्तानामपि तत्र प्रक्षेपात् । इदं चात्र संग्रहिण्यामसंगृहीतमपि सूत्रोक्तत्वाद्गम्यम् २९ । तेभ्यः सूक्ष्मवनस्पतिकायिका अपर्याप्ता असङ्ख्येयगुणाः, बादरनिगोदेभ्यः सूक्ष्मनिगोदानामपर्याप्तानामप्यसङ्ख्येयगुणत्वात् ३० । ततः सामान्यतः सूक्ष्मापर्याप्तका विशेषाधिकाः, सूक्ष्मपृथिवीकायिकादीनामप्यपर्याप्तकानां तत्र प्रक्षेपात् ३१ । तेभ्यः सूक्ष्मवनस्पतिकायिकाः पर्याप्ताः सङ्ख्येयगुणाः, सूक्ष्मवनस्पतिकायिकापर्याप्तेभ्यो हि सूक्ष्मवनस्पतिकायिकाः पर्याप्ताः सङ्ख्येयगुणाः सूक्ष्मेष्वोघतोऽपर्याप्तेभ्यः पर्याप्तानां सङ्ख्येयगुणत्वात् । तेन सूक्ष्मापर्याप्तेभ्योऽपि सूक्ष्मवनस्पतिकायिकाः पर्याप्ताः सङ्ख्येयगुणाः विशेषाधिक-

त्वस्य सङ्ख्येयगुणत्वबाधनायोगात् ३२। तेभ्यः सामान्यत सूक्ष्माः पर्याप्ता विशेषाधिकाः, पर्याप्तसूक्ष्मपृथिवीकायिकादीनामपि तत्र प्रक्षेपात् ३३। ततः सामान्यतः सूक्ष्माः पर्याप्तापर्याप्तविशेषणरहिता विशेषाधिकाः, अपर्याप्तानामपि तत्र प्रक्षेपात्। एतेऽप्यत्रासंगृहीता सूत्रोक्तत्वाल्लिखिताः ३४ ॥ ४८–५३ ॥ द्वारम् ॥ ४ ॥

**मणजोगीण असंखा वयजोगि अजोगिणो अणंतगुणा। तणुजोगिणो अणंता विसेसअहिया सजोगि त्ति ॥ जइ वि निगोयजियाणं णंताणोदीरिया तणू एगा। तह विहु कम्मणजोगा तणुजोगीणं अणंतत्तं ॥ ५५ ॥ केवलतणुजोगीसुं मणवयजोगेहिं खित्तएहिं तु। हुंति सजोगीजीवा पुव्वेहिंतो विसेसहिया ॥५६॥ दारं ५॥**

सर्वस्तोका मनयोगिनः। संज्ञिनः पर्याप्ता एव हि मनोयोगिनः, ते च स्तोका इति। तेभ्यो वाग्योगिनोऽसङ्ख्येयगुणाः, द्वीन्द्रियादीनां वाग्योगिनां संज्ञिभ्योऽसङ्ख्यातगुणत्वात्। तेभ्योऽयोगिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्। तेभ्यः काययोगिनोऽनन्ताः, वनस्पतिकायिकानामनन्तत्वात्। यद्यपि निगोदजीवानामनन्तानामेकं शरीरं तथापि तेनैकेन शरीरेण सर्वेऽप्याहारादिग्रहणं कुर्वन्तीति सर्वेषामपि काययोगित्वान्नानन्तगुणत्वव्याघात इति वृत्तिकारोक्तो हेतुः। तेभ्यः सामान्यतः सयोगिनो विशेषाधिकाः, द्वीन्द्रियादीनामपि वाग्योगिकादीनां तत्र प्रक्षेपात् ५ ॥५४–५६॥ द्वारम् ५॥

**पुरिसेहिंतो थीओ संखगुणा णंतया अवेया उ। संढा उ अणंतगुणा विसेसअहिया सवेया उ ॥ ५७॥**

सर्वस्तोकाः पुरुषवेदाः, संज्ञिनामेव तिर्यग्मनुष्याणां देवानां च पुरुषवेदभावात्। तेभ्यः स्त्रीवेदाः सङ्ख्येयगुणाः।

अवेदका अनन्तगुणाः, सिद्धानामनन्तत्वात्। तेभ्यो नपुंसकवेदा अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात्। सामान्यतः सवेदा विशेषाधिकाः, स्त्रीवेदकपुंवेदकानामपि तत्र प्रक्षेपात् ॥ ५७ ॥

पुरुषेभ्यः स्त्रीणां विशेषाधिकभावनायाह—

तिगुणा तिरूवअहिया तिरियाणं इत्थिया मुणेयव्वा। सत्तावीसगुणा पुण मणुयाणं तदहिया चेव ॥५८॥
बत्तीसगुणा बत्तीसरूवअहिया य तह य देवाणं। देवीओ इइ वुत्तं सुत्ते जीवाभिगमनामे ॥५९॥ दारं ६।
अकसाई अइथोवा माणकसाई तओ अणंतगुणा। कोही माई लोही सकसाई तह विसेसहिया ॥६०॥
गयरागा अकसाई तेणं ते अप्पय त्ति तेहिंतो। छक्काएसु वि भावा माणकसाई अणंतगुणा ॥ ६१ ॥
न उ सत्तामित्तेणं सकसायित्तं इहं अहिप्पेअं। किंतु तहापरिणामो स हि माणे अप्पकालीणो ॥६२॥
सेसाणं परिणामो जहुत्तरं होइ बहुअकालीणो। तेण जहुत्तं सव्वं कसायसुत्तं तु निरवज्जं ॥ ६३ ॥ दारं ७।

अकषायिणोऽतिस्तोकाः, सिद्धानां कतिपयानां च मनुष्याणामकषायित्वात्। तेभ्यो मानकषायिणो मानकषायपरिणामवन्तोऽनन्तगुणाः, षट्स्वपि जीवनिकायेषु मानकषायपरिणामस्यावाप्यमानत्वात्। तेभ्यः क्रोधकषायिणो विशेषाधिकाः। तेभ्यो मायाकषायिणो विशेषाधिकाः। तेभ्योऽपि लोभकषायिणो विशेषाधिकाः, मानकषायपरिणामकालापेक्षया क्रोधादिकषायपरिणामकालस्य यथोत्तरं विशेषाधिकतया क्रोधादिकषायाणामपि यथोत्तरं विशेषाधिकत्वात्। लोभकषायिभ्यः

सामान्यतः सकषायिणो विशेषाधिकाः, मानादिकषायाणामपि तत्र प्रक्षेपात् । सकषायिण इत्यत्रैवं व्युत्पत्तिः—सह कषा-येण कषायोदयेन वर्तन्ते ते सकषायोदयाः, विपाकावस्थां प्राप्ताः कषायकर्मपरमाणवः । तेषु सत्सु जीवस्यावश्यं कषायोद-यसंभवात् । सकषाया विद्यन्ते येषां ते सकषायिणः कषायोदयसहिता इत्यर्थः ॥ ६०–६३ ॥ द्वारम् ७ ॥

सुक्का १ पम्हा २ तेऊ ३ अलेसा ४ काउ ५ नील । किण्हा ७ य ।
थोवा १ दो संखगुणा ३ दोऽणंता ५ दो विसेसहिया ७ ॥ ६४ ॥

इह लंतगाइदेवा कम्मगनरतिरिगसंखवासाऊ । केइ वि सुक्किललेसा थोवा तो सुक्कलेस त्ति ॥ ६५ ॥
इत्तो उ पम्हलेसा बहुया जेणं तु लंतगाईणं । देवाणं संखगुणा सणंकुमाराइणो देवा ॥ ६६ ॥
चोएइ असंखगुणा तेऊलेसा कहं न हुज्जेह । ताराउ असंखगुणा भवणवईण वि जओ भणिया ॥ ६७ ॥
किं पुण सणंकुमारगमाईदेवाण ते अ किल भणिया । तेऊलेसाइजुया एयं तु न संगयं जम्हा ॥ ६८ ॥
लेसासुत्ते वुत्तं इत्थीणं पम्हलेसजुत्ताणं । तेऊलेसा इत्थी हवंति संखिज्जगुणियाओ ॥ ६९ ॥
तिरियाणं जोइसिया संखेयगुणा य दंडए वुत्ता । ता कह पम्हगलेसाहिंतो तेऊ असंखगुणा ॥ ७० ॥ दारं ८ ।

सर्वस्तोकाः शुक्लेश्याः, लान्तकादिष्वेवानुत्तरपर्यवसानेषु वैमानिकेषु देवेषु कतिपयेषु च गर्भव्युत्क्रान्तिषु कर्मभूमिकेषु

सङ्ख्येयवर्षायुष्केषु मनुष्येषु तिर्यक्स्त्रीपुंनपुंसकेषु कतिपयेषु सङ्ख्येयवर्षायुष्केषु तस्याः संभवात् । तेभ्यः पद्मलेश्याकाः सङ्ख्येयगुणाः, सा हि पद्मलेश्या सनत्कुमारमाहेन्द्रब्रह्मलोककल्पवासिषु देवेषु तथा प्रभूतेषु गर्भव्युत्क्रान्तिकेषु कर्मभूमिजेषु सङ्ख्येयवर्षायुष्केषु मनुष्यस्त्रीपुंसकेषु तथा गर्भजतिर्यग्योनिकस्त्रीपुंसेषु सङ्ख्येयवर्षायुष्केष्ववाप्यते । सनत्कुमारादिदेवादयश्च समुदिता लान्तकदेवादिभ्यः सङ्ख्येयगुणा इति भवन्ति शुक्ललेश्याकेभ्यः पद्मलेश्याकाः सङ्ख्येयगुणाः । तेभ्यस्तेजोलेश्याकाः सङ्ख्येयगुणाः, सर्वेषां सौधर्मेशानज्योतिष्कदेवानां कतिपयानां च भवनपतिव्यन्तरगर्भजतिर्यक्पञ्चेन्द्रियमनुष्याणां बादरापर्याप्तैकेन्द्रियाणां च तेजोलेश्याभावात् । नन्वसङ्ख्येयगुणाः कस्मान्न भवन्ति ?, कथं भवन्तीति चेदुच्यते, इह ज्योतिष्का भवनवासिभ्योऽप्यसङ्ख्येयगुणाः किं पुनः सनत्कुमारादिदेवेभ्यस्ते च ज्योतिष्कास्तेजोलेश्याकास्तथा सौधर्मेशानकल्पदेवाश्च ततः प्राप्नुवन्त्यसङ्ख्येयगुणाः, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात् लेश्यापदे हि गर्भजतिर्यग्योनिकानां संमूर्च्छिमपञ्चेन्द्रियतिर्यग्योनिकानां च कृष्णलेश्याद्यल्पबहुत्वे सूत्रं वक्ष्यति—"सव्वथोवा गब्भवक्कंतियतिरिक्खजोणिया सुक्कलेसातिरिक्खजोणिणीओ संखिज्जगुणाओ । पम्हलेसागब्भवक्कंतियतिरिक्खजोणिया संखेज्जगुणा तिरिक्खजोणिणीओ संखिज्जगुणाओ । तेउलेसागब्भवक्कंतियतिरिक्खजोणिया संखिज्जगुणा तेउलेसाओ तिरिक्खजोणिणीओ संखिज्जगुणाओ ।" इति महादण्डके च तिर्यग्योनिकस्त्रीभ्यो व्यन्तरा ज्योतिष्काश्च सङ्ख्येयगुणा वक्ष्यन्ते । ततो यद्यपि भवनवासिभ्योऽप्यसङ्ख्येयगुणा ज्योतिष्कास्तथापि पद्मलेश्याकेभ्यस्तेजोलेश्याकाः संख्येयगुणा एव । इदमत्र तात्पर्यम्—यदि केवलान् देवानेव पद्मलेश्याकानधिकृत्य देवा एव तेजोलेश्याकाश्चिन्त्यन्ते ततो भवन्त्यसङ्ख्येयगुणाः । यावता तिर्यक्सम्मिश्रया पद्मलेश्या-

धिकाः, संज्ञितिर्यक्पञ्चेन्द्रियमनुष्याणामेवावधिज्ञानविकलानामपि केषाञ्चिन्मतिश्रुतज्ञानभावात्, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः । तेभ्योऽसङ्ख्येयगुणा विभङ्गज्ञानिनः, सुरनरकेषु सम्यग्दृष्टिभ्यो मिथ्यादृष्टयो विभङ्गज्ञानिनोऽसङ्ख्येयगुणाः ॥ ७२ ॥ तेभ्यः केवलिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात् । तेभ्यो मत्यज्ञानिनः श्रुताज्ञानिनश्चानन्तगुणाः, वनस्पतीनामपि मत्यज्ञानश्रुताज्ञानभावात् तेषां चानन्तत्वात् । स्वस्थाने तु परस्परं तुल्याः ॥ ७३ ॥ द्वारम् १० ।

थोवा उ ओहिदंसी चक्खुदंसी भवे असंखिज्जा ।

केवलदंसि अणंता अचक्खुदंसी अणंतगुणा ॥ ७४ ॥ दारं ११ ।

सर्वस्तोका अवधिदर्शिनिनः, देवनैरयिकाणां कतिपयानां च संज्ञिपञ्चेन्द्रियतिर्यङ्मनुष्याणामवधिदर्शनभावात् । तेभ्यश्चक्षुर्दर्शिनोऽसङ्ख्येयगुणाः, सर्वेषां देवनैरयिकगर्भजमनुष्याणां संज्ञितिर्यक्पञ्चेन्द्रियाणामसंज्ञितिर्यक्पञ्चेन्द्रियाणां चतुरिन्द्रियाणां च चक्षुर्दर्शनभावात् । तेभ्यः केवलदर्शिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात् । तेभ्योऽचक्षुर्दर्शिनोऽनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तत्वात् ॥ ७४ ॥ द्वारम् ११ ।

थोव त्ति संजया तह य संजयाऽसंजया असंखगुणा ।

पडिसेहत्तियरूवा सिद्धाऽणंता अविरया य ॥ ७५ ॥ दारं १२ ।

---

२ वनस्पतीनामित्यर्थः ।

सेस अविग्गहवित्ती अस्संखाहारगा ते य ॥ ७९ ॥ दारं १४ ।

सर्वस्तोका अनाहारका जीवाः, विग्रहगत्यापन्नादीनामेवानाहारकत्वात् । उक्तं च—"विग्गहगइमावन्ना केवलिणो समुहया अजोगी य । सिद्धा य अणाहार सेसा आहारगा जीवा ।" इत्यादि । तेभ्य आहारका असङ्ख्येयगुणाः । ननु वनस्पतिकायानां सिद्धेभ्योऽप्यनन्तत्वात्तेषां चाहारकतया लभ्यमानत्वात् कथमनन्तगुणा न भवन्ति ?, तदयुक्तम्, वस्तुतत्त्वापरिज्ञानात् । इह सूक्ष्मनिगोदाः सर्वसङ्ख्ययाप्यसङ्ख्येयाः । तत्राप्यन्तमुहूर्त्तसमयराशितुल्याः सूक्ष्मनिगोदाः सर्वकालं विग्रहे वर्त्तमाना लभ्यन्ते । ततोऽनाहारका अप्यतिवहवः । सकलजीवराश्यसङ्ख्येयभागतुल्या इति । तेभ्य आहरका असङ्ख्येयगुणा एव नानन्तगुणा भवन्तीति भावः ॥ ७७–७९ ॥ द्वारं १४ ।

भासगजीवेहिन्तो अभासगा हुंति णंतगुणिया उ । दारं १५ ।

सर्वस्तोका भापका भाषालधिं सम्पन्नाः, द्वीन्द्रियादीनामेव भाषकत्वात् । स्तेभ्योऽभापका भापालब्धिहीना अनन्तगुणाः, वनस्पतिकायिकानामनन्तत्वात् । द्वारम् १५ ।

नो अपरित्तपरित्ता परित्तया णंतगुणिया उ ॥ ८० ॥

अपरित्ता णंतगुणा तत्थ परित्ता हवंति दुविहा उ । कायपरित्ता एगे अन्ने पुण भवपरित्त त्ति ॥ ८१ ॥

पत्तेअतणूकाया परित्तया सुक्कपक्खिया इयरे । दारं १६ ।

इह परीत्ता द्विविधा, भवपरीत्ताः कायपरीत्ताश्च । तत्र भवपरीत्ता येषां किञ्चिदूनापार्द्धपुद्गलपरावर्त्तमात्रसंसारः ।
कायपरीत्ताः प्रत्येकशरीरिणः । तत्रोभयेऽपि परीत्ताः सर्वस्तोकाः, शुक्लपाक्षिकाणां प्रत्येकशरीरिणां वाशेषजीवापेक्षया-
तिस्तोकत्वात् । ततो नोपरीत्ता नोअपरीत्ता उभयप्रतिषेधवृत्ता हि सिद्धा अनन्तगुणाः ॥ ८० ॥ तेभ्योऽपरीत्ता अनन्त-
गुणाः, कृष्णपाक्षिकाणां साधारणवनस्पतिकायानां वा सिद्धेभ्योऽप्यनन्तगुणत्वात् ॥ ८१ ॥ द्वारम् १६ ।

**सिद्धाणमपज्जत्ता णंता पज्जत्तया संखा ॥ ८२ ॥ दारं १७ ।**

सर्वस्तोका नोपर्याप्तका नोऽपर्याप्तकाः, उभयप्रतिषेधवर्त्तिनो हि सिद्धाः, ते चापर्याप्तकादिभ्यः सर्वस्तोका इति । ते-
भ्योऽपर्याप्तका अनन्तगुणाः, साधारणवनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणानां सर्वकालमपर्याप्तत्वेन लभ्यमानत्वात् ।
तेभ्यः पर्याप्ताः सङ्ख्येयगुणाः । इह सर्ववहवो जीवा सूक्ष्माः । सूक्ष्माश्च सर्वकालमपर्याप्तेभ्यः पर्याप्ताः सङ्ख्येयगुणा
इति ॥ ८२ ॥ द्वारम् १७ ।

**नोसुहुमबायराणं बायरगा हुंत णंतगुणिया उ ।**
**सुहुमा असंखगुणिया सुहुमनिगोए पडुच्चेवं ॥ ८३ ॥ दारं १८ ।**

सर्वस्तोका नोसूक्ष्मा नोवादरा जीवाः सिद्धा इत्यर्थः, तेषां सूक्ष्मवादरजीवराशेरनन्तभागकल्पत्वात् । तेभ्यो वादरा
अनन्तगुणाः, वादरनिगोदजीवानां सिद्धेभ्योऽप्यनन्तगुणत्वात् । तेभ्यः सूक्ष्मा असङ्ख्येयगुणाः, वादरनिगोदेभ्यः सूक्ष्म-
निगोदानामसङ्ख्येयगुणत्वात् ॥ ८३ ॥ द्वारम् १८ ।

सन्नी थोवा सिद्धा णंता अस्सन्निणो अणंतगुणा । दारं १९ ।

सर्वस्तोकाः संज्ञिनः, समनस्कानामेव संज्ञित्वात् । तेभ्यो नोसंज्ञिनो नोऽसंज्ञिनोऽनन्तगुणाः, उभयप्रतिषेधवृत्ता हि सिद्धास्ते च संज्ञिभ्योऽनन्तगुणा एवेति । तेभ्याऽसंज्ञिनोऽनन्तगुणाः, वनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणत्वात् । द्वारम् १९ ॥

अब्भवाणं सिद्धा णंतगुणा णंतया भवा ॥ ८४ ॥ दारं २० ।

सर्वस्तोका अभवसिद्धिका अभव्याः, जघन्ययुक्तानन्तपरिमाणत्वात् । तेभ्यो नोभवसिद्धिका नोऽभवसिद्धिकाः सिद्धाः अनन्तगुणाः, अजघन्योत्कृष्टयुक्तानन्तकपरिमाणत्वात् । तेभ्यो भव्या अनन्तगुणाः, यतो भव्यनिगोदस्यैकस्यानन्तभागकल्पाः सिद्धाः, भव्यजीवराशिनिगोदाश्चासङ्ख्येया लोक इति ॥ ८४ ॥ द्वारम् २० ॥

धम्माधम्मागासा[1] इक्किक्का दव्वयाइ ते थोवा । धम्माधम्मोय समा पएसओ ते असंखगुणा ॥ ८५ ॥
जीवा दव्वा णंता ते चेव पएसओ असंखगुणा । पुग्गलदव्वा णंता पएसओ ते असंखगुणा ॥ ८६ ॥
अद्धासमया णंता नहप्पएसा तओ अणंतगुणा । दारं २१ ।

धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकाया एते त्रयोऽपि द्रव्यार्थतया, द्रव्यमेवार्थो द्रव्यार्थस्तस्य भावो द्रव्यार्थता तया द्रव्यरूपतयेत्यर्थः, तुल्या समाः प्रत्येकमेकैकसङ्ख्याकत्वात्, अत एव सर्वस्तोकाः ३ । तेभ्यो धर्मास्तिकायाधर्मास्तिकायौ

---

१ "० म्मागासा" इत्यपि पाठः ।

प्रदेशार्थतयाऽसङ्ख्येयगुणौ, परस्परं तुल्यौ, द्वयोरपि लोकाकाशप्रदेशप्रमाणप्रदेशत्वात् ५। ताभ्यां जीवास्तिकायो द्रव्यार्थतयानन्तगुणः, जीवानां प्रत्येकं द्रव्यत्वात् तेषां चानन्तत्वात् ६। ततः स एव प्रदेशार्थतयाऽसङ्ख्येयगुणः, प्रतिजीवं लोकाकाशप्रदेशप्रमाणप्रदेशभावात् ७। ततः पुद्गलास्तिकायो द्रव्यार्थतयाऽनन्तगुणः कथम्?, इति चेदुच्यते—यत इह परमाणुद्विप्रदेशकादीनि पृथक्पृथग्द्रव्याणि, तानि च सामान्यतस्त्रिधा, प्रयोगपरिणतानि मिश्रपरिणतानि विस्रसापरिणतानि च। तत्र प्रयोगपरिणताण्येव तावज्जीवप्रदेशेभ्योऽनन्तगुणानि। एकैकस्य जीवप्रदेशस्यानन्तैः प्रत्येकं ज्ञानावरणीयादिकर्मपुद्गलस्कन्धैरावेष्टितत्वात्, किं पुनः शेषाणि १। ततः प्रयोगपरिणतेभ्यो मिश्रपरिणतान्यनन्तगुणानि। तेभ्यो विस्रसापरिणतान्यनन्तगुणानि ८। तस्मादपि पुद्गलास्तिकायः स्व(सत्)द्रव्यापेक्षया प्रदेशार्थतया चिन्त्यमानोऽसङ्ख्येयगुणः। ननु कथं नानन्तगुणोऽनन्तप्रदेशकानामपि स्कन्धानां बहूनां भावात्, नैवं, स्वल्पा अनन्तप्रदेशकाः स्कन्धाः, परमाण्वादयस्त्वतिबहवः, तथा च वक्ष्यति सूत्रम्—" सव्वत्थोवा अणंतप्पएसिया खंधा दव्वट्ठयाए। परमाणुपोग्गला दव्वट्ठयाए अणंतगुणा। संखिज्जपएसिया खंधा दव्वट्ठयाए संखिज्जगुणा। असंखिज्जपएसिया खंधा दव्वट्ठयाए असंखिज्जगुणा।" इति। ततश्चात्रानन्तप्रदेशकानामतिस्तोकत्वात् परमाणूनां चातिबहुत्वात्तेषां च पृथक् पृथग्द्रव्यत्वादसङ्ख्येयप्रदेशकानां च स्कधानां परमाण्वपेक्षयाऽसङ्ख्येयगुणत्वादसङ्ख्येयगुण एवोपपद्यते पुद्गलास्तिकायः प्रदेशार्थतया नानन्तगुणः ९। तस्मादप्यद्धासमयो द्रव्यार्थतयाऽनन्तगुणः। कथम्?, इति चेदुच्यते—इहैकस्यैव परमाणोरनागते काले, तत्तद्द्विप्रदेशक– त्र्यणु-

१ " जीवेभ्योऽनन्तगुणानि। एकैकस्य जीवस्यानन्तैः " इति पाठः प्रज्ञापनाटीकायाम्।

क—सङ्ख्याताऽणुक—असङ्ख्याताऽणुक—अनन्ताऽणुकस्कन्धान्तपरिणामतयाऽनन्ता भाविनः संयोगाः पृथक् पृथक् कालाः। यथा चैकस्य परमाणोस्तथा सर्वेषां प्रत्येकं द्व्यणुकादिस्कन्धानामनन्ताः संयोगाः पुरस्कृताः, सर्वेषामपि मनुष्यक्षेत्रान्तर्वर्त्तितया परिणामसम्भवात्। तथा क्षेत्रतोऽप्ययं परमाणुरमुष्मिन्नाकाशप्रदेशेऽमुष्मिन् कालेऽवगाहिष्यत इत्येवमनन्ता एकस्याणोर्भाविनः संयोगाः। यथैकस्याणोस्तथा सर्वेषां परमाणूनां तथा द्विप्रदेशकादीनामपि स्कन्धानामनन्ताणुपर्यन्तानां प्रत्येकं तत्तदेकप्रदेशाद्यवगाहभेदतो भिन्नभिन्नकाला अनन्ता भाविनः संयोगाः। तथा कालतोऽप्ययं परमाणुरमुष्मिन्नाकाशप्रदेशे एकसमयस्थितिको द्विसमयस्थितिक इत्येवमेकस्यापि परमाणोरेकस्मिन्नाकाशप्रदेशेऽसङ्ख्येया भाविनः संयोगाः। एवं सर्वेष्वपि आकाशप्रदेशेषु प्रत्येकमसङ्ख्येया भाविनः संयोगाः। ततो भूयो भूयस्तेष्वाकाशप्रदेशेषु परावृत्तौ कालस्यानन्तत्वादनन्ताः[1] कालतो भाविनः संयोगाः। यथा चैकस्याणोस्तथा सर्वेषामप्यणूनां सर्वेषां प्रत्येकं द्व्यणुकादीनां च। भावतोऽप्ययं परमाणुरमुष्मिन् काले एकगुणकालको द्विगुणकालको भावीत्येवमेकस्याप्यणोर्भिन्नभिन्नकाला अनन्ताः संयोगाः। यथा चैकस्याणोस्तथा सर्वेषामणूनां सर्वेषां च द्व्यणुकादीनां पृथक् पृथगनन्ता भावतः पुरस्कृताः संयोगाः। तदेवमेकस्याप्यणोर्द्रव्यक्षेत्रकालभावविशेषसम्बन्धवशादनन्ता भाविनोऽतीताश्च समया उपलब्धाः। यथैकस्याणोस्तथा सर्वेषामणूनां सर्वेषां च प्रत्येकं द्व्यणुकादीनां स्कन्धानाम्। न चैतत्परिणामिकालवस्तुव्यतिरेके परिणामिपुद्गलास्तिकायादिव्यतिरेके चोपपद्यते। ततः सर्वमिदं तात्त्विकमवसेयम्। यथा सर्वेषां परमाणूनां सर्वेषां च द्व्यणुकादीनां स्कन्धानां प्रत्येकं

---

१ कालानन्तत्वमित्यर्थः।

माणत्वात् । तेभ्योऽनन्तगुणाश्चरमाः, अजघन्योत्कृष्टानन्तानन्तकपरिमाणत्वात् । 'इह' एतद्गाथोक्ता "जमईआणागयद्धा य"इति युक्तिरत्राधिकारे वृत्तौ न दृष्टेति ॥ ८७ ॥ ८८ ॥ द्वारम् २२ ।

जीवा १ पुग्गल २ समया ३ द्व ४ पएसा ५ य पज्जवा ६ चेव ।
थोवा १ णंता २ णंता ३ विसेसमहिआ ४ दुवे णंता ६ ॥ ८९ ॥

इक्किक्को जियदेसो णंताणंतेहिँ कम्मगअणूहिं । परिवेढिउ त्ति तेणं जीवाणं पुग्गला णंता ॥ ९० ॥
दव्वाईभावाणं संबंधविसेसओ अणंताओ । हुंति हु अद्धासमया एगम्मि वि सुद्धअणुयंमि ॥ ९१ ॥
जमणंता वि हु समया दव्वाइं तेसि मज्झयारंमि । जीवाइपञ्च दव्वा छूढा तो बहुतरा दव्वा ॥ ९२ ॥
आगासा णंतत्ता दव्वपएसा भवंत णंतगुणा । पज्जवया वि अणंता पइप्पएसं जओ णंता ॥ ९३ ॥ दारं २३ ।

सर्वस्तोका जीवाः १ । तेभ्यः पुद्गला अनन्तगुणाः २ । तेभ्योऽद्धासमया अनन्तगुणाः ३ । अत्र भावना प्रागेवोक्ता । तेभ्योऽद्धासमयेभ्यः सर्वद्रव्याणि विशेषाधिकानि । कथम् ?, इति चेदुच्यते—इह येऽनन्तरमद्धासमयाः पुद्गलेभ्योऽनन्तगुणा उक्तास्ते प्रत्येकं द्रव्याणि, ततो द्रव्यचिन्तायां तेऽपि परिगृह्यन्ते । तेषु च मध्ये सर्वजीवद्रव्याणि सर्वपुद्गलद्रव्याणि धर्माधर्माकाशास्तिकायद्रव्याणि च प्रक्षिप्यन्ते, तानि च समुदितान्यद्धासमयानामनन्तभागकल्पानीति तेषु प्रक्षिप्तेष्वपि मनागधिकत्वं जातमित्यद्धासमयेभ्यः सर्वद्रव्याणि विशेषाधिकानि ४ । तेभ्यः सर्वप्रदेशा अनन्तगुणाः, आकाशानन्तत्वात् ५ ।

तेभ्यः सर्वपर्यवा अनन्तगुणाः, एकैकस्मिन्नाकाशप्रदेशेऽनन्तानामगुरुलघुपर्यायाणां भावात् ॥ ८९-९३ ॥ द्वारम् २३ ।

उड्ढतिरियंमि थोवा १ अहतिरिए हुंति तो विसेसहिआ २ ।
तिरियंमि असंखगुणा ३ असंखगुणिया उ तेलोए ४ ॥ ९४ ॥
उड्ढंमि असंखगुणा ५ जिआ विसेसाहिआ अहोलोए ६ । खित्तबहुत्तणेण य जहुत्तरं जीवबहुयत्तं ॥९५॥
तिरियलोयस्स उ अंतो आई उड्ढस्स पयरदुगमेयं । उड्ढतिरियं ति भिन्नइ एवं चिय होइ अहतिरियं ॥९६॥
समुग्घायविग्गहेहिं फुसंति जे देहिणो उ तियलोयं । तेलुक्कत्था ते इह भावत्थो वित्तिओ नेओ ॥ ९७॥

सर्वस्तोका ऊर्ध्वतिर्यग्लोके । इहोर्ध्वलोकस्य यदधस्तनमाकाशप्रदेशप्रतरं यच्च तिर्यग्लोकस्य सर्वोपरितनमाकाशप्रदे-
शप्रतरमेष ऊर्ध्वतिर्यग्लोकः । इयमत्र भावना—इह सामस्त्येन चतुर्दशरज्ज्वात्मकलोकस्त्रिधा भिद्यते, ऊर्ध्वलोकः १ तिर्य-
ग्लोकः २ अधोलोकश्च ३ । रुचकाच्चैतेषां विभागः, तथाहि—रुचकस्याधस्तान्नवयोजनशतानि रुचकस्योपरिष्टान्नवयोजन-
शतानि तिर्यग्लोकः, तस्याधस्तादधोलोकः, उपरिष्टादूर्ध्वलोकः । तत्र रुचकसमाद्भूभागान्नवयोजनशतानि गत्वा ज्योतिश्च-
क्रस्योपरितनं तिर्यग्लोकसम्बन्धि एकप्रादेशिकमाकाशप्रतरं तिर्यग्लोकप्रतरं, तस्य चोपरि यदेकप्रादेशिकमाकाशप्रतरमूर्ध्व-
लोकप्रतरम्, एते च द्वे अप्यूर्ध्वतिर्यग्लोक इति व्यवह्रियते । तत्र वर्त्तमाना जीवाः सर्वस्तोकाः । कथम् ?, इह ये ऊर्ध्व-
लोकात्तिर्यग्लोके तिर्यग्लोकाद्वोर्ध्वलोके समुत्पद्यमाना विवक्षितं प्रतरद्वयं स्पृशन्ति, ये च तत्रस्था एव केचन तत्प्रतरद्व-

याध्यासिनो वर्त्तन्ते ते किल विवक्षितप्रतरद्वये वर्त्तन्ते[1] नान्ये। ये पुनरूर्द्ध्वलोकादधोलोके समुत्पद्यमानास्तत्प्रतरद्वयं स्पृशन्ति ते न गण्यन्ते, तेषां त्रैलोक्यस्पर्शित्वात्। ततः स्तोका एवाधिकृतप्रतरद्वयवर्तिनो जीवाः। ननूर्द्ध्वलोकगतानामपि सर्वजीवानामसङ्ख्येयो भागोऽनवरतं म्रियमाणोऽवाप्यते, ते च तिर्यग्लोके समुत्पद्यमाना विवक्षितं प्रतरद्वयं स्पृशन्तीति कथमधिकृतप्रतरद्वयस्पर्शिनः स्तोकाः ?, तदयुक्तं, यद्यप्यूर्द्ध्वलोकगतानां सर्वजीवानामसङ्ख्येयो भागोऽनवरतं म्रियमाणोऽवाप्यते तथापि न ते सर्वे एव तिर्यग्लोके समुत्पद्यन्ते, प्रभूततराणामूर्द्ध्वलोकेऽधोलोके च समुत्पादादिति १। तेभ्योऽधोलोकतिर्यग्लोके विशेषाधिकाः, इह यदधोलोकस्योपरितनमेकप्रादेशिकमाकाशप्रदेशप्रतरं यच्च तिर्यग्लोकस्याधस्तनमेकप्रादेशिकमाकाशप्रदेशप्रतरं,एतद्द्वयमप्यधोलोकतिर्यग्लोक उच्यते। तत्र ये विग्रहगत्या तत्रस्थतया वा वर्त्तन्ते ते विशेषाधिकाः। कथम् ?, इह येऽधोलोकात्तिर्यग्लोके तिर्यग्लोकाद्वाऽधोलोके इलिकागत्या समुत्पद्यमाना अधिकृतप्रतरद्वयं स्पृशन्ति, ये च तत्रस्था एव केचन तत्प्रतरद्वयमध्यासीना वर्त्तन्ते ते विवक्षितप्रतरद्वयवर्त्तिनः। ये पुनरधोलोकादूर्द्ध्वलोके उत्पद्यमानास्तत्प्रतरद्वयं स्पृशन्ति न ते गृह्यन्ते, तेषां त्रैलोक्यस्पर्शित्वात्[2]। केवलमूर्द्ध्वलोकादधोलोको विशेषाधिक इत्यधोलोकात्तिर्यग्लोक उत्पद्यमाना ऊर्द्ध्वलोकापेक्षया विशेषाधिकाः २। तेभ्यस्तिर्यग्लोकवर्त्तिनोऽसङ्ख्येयगुणा इति, उक्तक्षेत्रद्विकात्तिर्यग्लोकक्षेत्रस्यासङ्ख्येयगुणत्वात् ३। तेभ्यस्त्रैलोक्यसंस्पर्शिनोऽसङ्ख्येयगुणाः, इह ये केवले ऊर्द्ध्वलोकेऽधोलोके तिर्यग्लोके वा वर्त्तन्ते, ये च विग्रहगत्योर्द्ध्वलोकतिर्यग्लोकावधोलोकतिर्यग्लोकौ वा स्पृशन्ति ते न गण्यन्ते। किन्तु ये विग्रहगत्यापन्नास्त्री-

---

१ "तेषा सूत्रान्तरविषयत्वात्।" इति प्रज्ञापनाटीकायाम्। २ "तेषां सूत्रान्तरविषयत्वात्।" इति प्रज्ञापनाटीकायाम्।

लोकत्रयस्पर्शिनो नैरयिकाः ? कथं वा ते सर्वस्तोकाः ? इत्याह—इह ये मेरुशिखरेऽञ्जनदधिमुखपर्वतशिखरादिषु वा वापीषु वर्त्तमाना मत्स्यादयो नारकेषूत्पित्सव इलिकागत्या प्रदेशान् विक्षिपन्ति ते किल त्रैलोक्यमपि स्पृशन्ति, नारकव्यपदेशं च लभन्ते, तत्कालमेव नरकेषूत्पत्तेर्नारकायुष्कप्रतिसंवेदनात् । ते चेत्थम्भूताः सर्वस्तोकाः । अन्ये तु व्याचक्षते नारका एव यथोक्तवापीषु तिर्यक्पञ्चेन्द्रियतयोत्पद्यमानाः समुद्धातवशतो विक्षिप्तनिजात्मप्रदेशदण्डा अद्यापि कालमकुर्वन्तो जातमरणाः परिगृह्यन्ते । ते हि किल तदा नारका एव निर्विवादं तदायुष्कसंवेदनात् त्रैलोक्यस्पर्शिनश्च यथोक्तवापीर्यावदात्मप्रदेशदण्डस्य विक्षिप्तत्वादिति १ । तेभ्यः प्रतरद्वयरूपाधोलोकतिर्यग्लोकेऽसङ्ख्येयगुणाः । यतो मन्दरादिक्षेत्रादसङ्ख्येयगुणादसङ्ख्येयद्वीपसमुद्रात्मकक्षेत्रात्तिर्यक्पञ्चेन्द्रिया नरकेषूत्पद्यमाना यथोक्तं प्रतरद्वयं स्पृशन्ति। अन्ये त्वाहुः—नारका एवासङ्ख्येयेषु द्वीपसमुद्रेषु तिर्यक्पञ्चेन्द्रियतयोत्पद्यमाना मारणान्तिकसमुद्धातेन विक्षिप्तनिजात्मप्रदेशदण्डा द्रष्टव्याः। ते हि नारकायुर्वेदनान्नारका उद्वर्त्तमाना अप्यसङ्ख्येयगुणाः प्राप्यन्त इति २ । तेभ्योऽधोलोकेऽसङ्ख्येयगुणाः, तस्य तेषां स्वस्थानत्वादधोलोकक्षेत्रस्यासङ्ख्येयत्वाच्च ३ । तिरश्चां क्षेत्रतोऽल्पबहुत्वमौघिकजीववत् सूक्ष्मनिगोदानामुभयत्र भावात् ॥ ९८ ॥

**पंचम १ पढम २ चउत्थे ३ बीए ४ छट्ठे५तइज्ज ६ तिरियत्थी। थोवा१ऽसंखा २ सेसा संखिज्जगुणा कमेणेव ९९**

पञ्चमे ऊर्ध्वलोके तिर्यग्योनिकस्त्रियः सर्वस्तोकाः । इह मन्दरादिवापीप्रभृतिष्वपि हि पञ्चेन्द्रियतिर्यग्योनिकाः स्त्रियो भवन्ति, ताश्च क्षेत्रस्याल्पत्वात् सर्वस्तोकाः १ । ताभ्य ऊर्ध्वलोकतिर्यग्लोके प्रतरद्वयरूपे वर्त्तमाना असङ्ख्येयगुणाः । कथम् ?, यावत्सहस्रारदेवलोकस्तावद्देवा अपि गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रिययोनित्वेनोत्पद्यन्ते, किं पुनः शेषकायाः ?।

ततो ये सहस्रारान्ता देवा अन्येऽपि च शेषकाया ऊर्द्ध्वलोकात्तिर्यग्लोके
ते हि यथासङ्ख्यमुपरिवर्त्तिनोऽपि तत्रोत्पद्यन्ते । ततो ये सहस्रारान्ता देवा अन्येऽपि च शेषकाया ऊर्द्ध्वलोकात्तिर्यग्लोके
तिर्यक्पञ्चेन्द्रियस्त्रीत्वेन तदायुःसंवेदयमाना उत्पद्यन्ते । यास्तिर्यग्लोकवर्त्तिन्यस्तिर्यक्पञ्चेन्द्रियस्त्रिय ऊर्द्ध्वलोके देवत्वेन
शेषकायत्वेन वोत्पद्यमाना मारणान्तिकसमुद्धातेनोत्पत्तिदेशे निजनिजात्मप्रदेशदण्डान् विक्षिपन्ति ता यथोक्तं प्रतरद्वयं
स्पृशन्ति । तिर्यग्योनिकस्त्रियश्च तास्ततोऽसङ्ख्येयगुणाः २ । ताभ्यस्त्रिलोके सङ्ख्येयगुणाः । यस्मादधोलोकाद्भवनपतिव्यन्त-
रनारकाः शेषकाया अपि चोर्द्ध्वलोकेऽपि तिर्यक्पञ्चेन्द्रियस्त्रीत्वेनोत्पद्यन्ते, ऊर्द्ध्वलोकादेवादयोऽप्यधोलोके च समवहता
निजनिजात्मप्रदेशदण्डैस्त्रीनपि लोकान् स्पृशन्ति प्रभूताश्च ते। तथा तिर्यग्योनिकस्त्र्यायुःसंवेदनात्तिर्यग्योनिकस्त्रियश्च ततः
सङ्ख्येयगुणाः ३ । ताभ्योऽधोलोकतिर्यग्लोकसंज्ञे प्रतरद्वये सङ्ख्येयगुणाः, बहवो हि नारकाः समुद्धातं विनापि तिर्यग्लोके
तिर्यक्पञ्चेन्द्रियस्त्रीत्वेनोत्पद्यन्ते, तिर्यग्लोकवर्त्तिनश्च जीवास्तिर्यक्स्त्रीत्वेनाधोलौकिकग्रामेष्वपि च। तथा च ते उत्पद्यमाना
यथोक्तं प्रतरद्वयं स्पृशन्ति तिर्यग्योनिकस्त्र्यायुःप्रतिसंवेदनाच्च तिर्यग्योनिकस्त्रियोऽपि । तथाऽधोलौकिकग्रामा योजनसह-
स्रावगाहाः पर्यन्तेऽर्वाक् क्वचित्प्रदेशे नवयोजनशतावगाहा अपि । तत्र काश्चित्तिर्यग्योनिकस्त्रियोऽवस्थानेनापि यथोक्त-
प्रतरद्वयाध्यासिन्यो वर्त्तन्ते, ततो भवन्ति पूर्वोक्ताभ्यः सङ्ख्येयगुणाः ४ । ताभ्योऽधोलोके सङ्ख्येयगुणाः, यतोऽधोलौकिक-
ग्रामाः सर्वेऽपि च समुद्रा योजनसहस्रावगाहास्ततो नवयोजनशतानामधस्ताद्या वर्त्तन्ते मत्सीप्रभृतिकास्तिर्यग्योनिकस्त्रि-
यस्ताः स्वस्थानत्वात् प्रभूता इति सङ्ख्येयगुणाः ५ । ताभ्यस्तिर्यग्लोके सङ्ख्येयगुणाः, क्षेत्रस्य सङ्ख्येयगुणत्वात् ६, ॥ ९९ ॥

**चउथे१पढमे२बीए३पंचम४छट्ठे५तइज्जए६मणुया । थोवा१ऽसंखा२सेसा संखिज्जगुणा६कमेणेव ॥ १०० ॥**

मनुष्यास्त्रिलोकस्पर्शिनः स्तोकाः, यतो ये ऊर्ध्वलोकादधोलौकिकग्रामेषूत्पित्सवो मारणान्तिकसमुद्घातेन समवहता भवन्ति ते च केचित्समुद्घातवशाद्बहिर्निर्गतैरात्मप्रदेशैस्त्रीनपि लोकान् स्पृशन्ति। येऽपि च वैक्रियसमुद्घातमाहारकसमुद्घातं वा गतास्तथाविधप्रयत्नविशेषाद्दूरतरमूर्ध्वाधोविक्षिप्तात्मप्रदेशा ये च केवलिसमुद्घातं गतास्तेऽपि त्रीनपि लोकान् स्पृशन्ति, एते सर्वेऽपि मीलिताः स्तोका एवेति १। तेभ्यः प्रथमे ऊर्ध्वलोकतिर्यग्लोकप्रतरद्वयरूपेऽसङ्ख्येयगुणाः, यतो वैमानिकाः शेषकायाश्च यथासम्भवमूर्ध्वलोकात्तिर्यग्लोके मनुष्यत्वेन समुत्पद्यमाना यथोक्तप्रतरद्वयस्पर्शिनो भवन्ति। विद्याधराणामपि च मन्दरादिषु गमनं, तेषां च शुक्ररुधिरादिपुद्गलेषु सम्मूर्छिममनुष्याणामुत्पाद इति ते विद्याधरा रुधिरादिपुद्गलसम्मिश्रा यदा गच्छन्ति तदा संमूर्छिममनुष्या अपि यथोक्तप्रतरद्वयं स्पृशन्ति, ते चातिबहव इत्यसङ्ख्येयगुणाः २। तेभ्यो द्वितीयेऽधोलोकतिर्यग्लोके प्रतरद्वयात्मनि सङ्ख्येयगुणाः, यतोऽधोलौकिकग्रामेषु स्वभावत एव बहवो मनुष्याः, ततो ये तिर्यग्लोकान्मनुष्येभ्यः शेषकायेभ्यो वाऽधोलौकिकग्रामेषु गर्भजमनुष्यत्वेन सम्मूर्छिममनुष्यत्वेन वोत्पित्सवो येऽधोलोकादधोलौकिकग्रामरूपात् शेषाद्वा मनुष्येभ्यः शेषकायेभ्यो वा तिर्यग्लोके गर्भजमनुष्यत्वेन संमूर्छिममनुष्यत्वेन वोत्पित्सवस्ते यथोक्तं प्रतरद्वयं स्पृशन्ति बहुतराश्च ते। तथा स्वस्थानतोऽपि किञ्चिदधोलौकिकग्रामेषु यथोक्तप्रतरद्वयस्पर्शिन इति ते प्रागुक्तेभ्यः सङ्ख्येयगुणाः ३। तेभ्यः पञ्चमे ऊर्ध्वलोके सङ्ख्येयगुणाः, यतः सौमनसादिषु क्रीडार्थं चैत्यवन्दननिमित्तं वा प्रभूततराणां विद्याधराणां चारणमुनीनां च भावात्, तेषां च रुधिरादिपुद्गलतः सम्मूर्छिममनुष्यसम्भवात् ४। तेभ्यः षष्ठेऽधोलोके सङ्ख्येयगुणाः स्वस्थानत्वेन बहुत्वभावात् ५। तेभ्यस्तृतीये तिर्यग्लोके सङ्ख्येयगुणाः, क्षेत्रस्य सङ्ख्ये-

तेभ्यः चतुर्थे त्रैलोक्ये सङ्ख्येयगुणाः, यतो भवनपतिव्यन्तरज्योतिष्कवैमानिकदेवास्तथाविधप्रयत्नविशेषवशतो वैक्रियसमुद्घातेन त्रीनपि लोकान् स्पृशन्ति ते चेत्थं समवहताः प्रागुक्तप्रतरद्वयस्पर्शिभ्यः सङ्ख्येयगुणाः केवलवेदसोपलभ्यन्ते ३। तेभ्यो द्वितीयेऽधोलोकतिर्यग्लोके सङ्ख्येयगुणाः, तद्धि प्रतरद्वयं भवनपतिव्यन्तरदेवानां प्रत्यासन्नतया स्वस्थानं, तथा बहवो भवनपतयः स्वभवस्थास्तिर्यग्लोकगमागमेन तथोद्वर्त्तमानास्तथा वैक्रियसमुद्घातेन समवहतास्तिर्यग्लोकस्थास्तिर्यक्पञ्चेन्द्रियमनुष्या वा भवनपतित्वेनोत्पद्यमाना भवनपत्यायुरनुभवन्तो यथोक्तप्रतरद्वयस्पर्शिनोऽतिबहव इति सङ्ख्येयगुणाः ४। तेभ्यः षष्ठेऽधोलोके सङ्ख्येयगुणाः, भवनपतीनां स्वस्थानत्वात् ५। तेभ्यस्तृतीये तिर्यग्लोके सङ्ख्येयगुणाः, ज्योतिष्कव्यन्तराणां स्वस्थानत्वात् ६। एवं देव्योऽपि। इदमौघिकं देवदेवीविषयमल्पबहुत्वमुक्तम्। विभागतस्तु चतुर्गतिनिकायदेवदेव्यल्पबहुत्वाष्टकं पर्याप्तापर्याप्तैकेन्द्रियादिपृथ्व्यादीनां पृथगल्पबहुत्ववृन्दं च सभावनं प्रज्ञापनासूत्रवृत्तिभ्यां ज्ञेयम्॥१०२॥द्वारम्२४॥

आउयबंध १ अपज्जत्त २ सुत्त ३ सम्मोहया य ४ सायगया।
अक्खोवउत्त ६ अणगारुवउत्ता ७ संखगुणिया उ ॥ १०३ ॥

स्तोका आयुष्कर्मणो बन्धकाः, तद्बन्धकालस्य भवत्रिभागादेः प्रतिनियतत्वात् १। तेभ्योऽपर्याप्ताः सङ्ख्येयगुणाः, यतोऽपर्याप्ता भवत्रिभागाद्यवशेषायुषः परभवायुर्बध्नन्ति। ततो द्वौ त्रिभागावबन्धकाल एको बन्धकाल इति बन्धकालादबन्धकालः सङ्ख्येयगुणस्तेन सङ्ख्येयगुणा एवापर्याप्ता आयुर्बन्धकेभ्यः २। तेभ्यः सुप्ताः सङ्ख्येयगुणाः, यतोऽपर्याप्तेषु पर्याप्तेषु च सुप्ता लभ्यन्ते। पर्याप्ताश्चापर्याप्तेभ्यः सङ्ख्येयगुणाः। एतच्च सूक्ष्मजीवानधिकृत्य वेदितव्यम्। सूक्ष्मेषु बाह्यो व्याघातो

विशेषाधिकाः,अपर्याप्तानामप्यायुष्कर्माबन्धकत्वभावात् १ ॥ १०४ ॥ १०५ ॥ द्वारम् २५ ॥

इदमेवाल्पबहुत्वं विनेयजनानुग्रहायासत्कल्पनया स्थापनाराशिभिरुपदर्श्यते । इह द्वे पङ्क्ती उपर्यधोभावेन स्थाप्येते । तत्रोपरितन्यां पङ्क्तौ आयुष्कर्मबन्धका अपर्याप्ताः सुप्ताः समवहताः सातवेदका इन्द्रियोपयुक्ता अनाकारोपयुक्ताः क्रमेण स्थाप्यन्ते । तस्या अधस्तन्यां पङ्क्तौ तेषामेव पदानामधस्ताद्यथासङ्ख्यमायुरबन्धकाः पर्याप्ता जागरा असमवहता असातवेदका नोइन्द्रियोपयुक्ताः साकारोपयुक्ताश्च । स्थापना चेयम् ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| आयुर्बन्धका. १ | अपर्याप्ता॰ २ | सुप्ता. ४ | समवहता ८ | सातवेदका १६ | इन्द्रियोपयुक्ताः ३२ | अनाकारोपयुक्ता ६४ |
| आयुरबन्धका॰ २५५ | पर्याप्ता २५४ | जागरा २५२ | असमवहताः २४८ | असातवेदका. २४० | नोइन्द्रियोपयुक्ता २२४ | साकारोपयुक्ता १९२ |

अत्रोपरितन्यां पङ्क्तौ सर्वाण्यपि पदानि सङ्ख्येयगुणानि । आयुष्पदं च सर्वेषामाद्यमिति तत्परिमाणसङ्ख्यायामेकः स्थाप्यते । ततः शेषपदानि किल जघन्येन सङ्ख्येयेन सङ्ख्येयगुणानीतिद्विगुणद्विगुणोऽङ्कस्तेषु स्थाप्यते । तद्यथा—द्वौ चत्वारोऽष्टौ षोडश द्वात्रिंशच्चतुःषष्टिः । सर्वोऽपि जीवराशिरनन्तानन्तस्वरूपोऽप्यसत्कल्पनया षट्पञ्चाशदधिकशतद्वयपरिमाणः परिकल्प्यते । ततोऽस्माद्राशेरायुर्बन्धकादिगताः सङ्ख्याः शोधयित्वा यच्छेषमवतिष्ठति तदायुरबन्धकादीनां परिमाणे स्थापयितव्यम् । तद्यथा—आयुरबन्धकपदे द्वे शते पञ्चपञ्चाशदधिके शेषेषु क्रमेण द्वे शते चतुःपञ्चाशदधिके द्वे शते द्विपञ्चाशदधिके द्वे शतेऽष्टौ चत्वारिंशदधिके द्वे शते चत्वारिंशदधिके द्वे शते चतुर्विंशत्यधिके द्विनवत्यधिकं शतम् । एवं च सत्युपरितनपङ्क्तिगतान्यनाकारोपयुक्तपर्यन्तानि पदानि सङ्ख्येयगुणानि द्विगुणद्विगुणाधिकत्वात् । ततः परं साकारोपयुक्तपदमपि

यावल्लोकान्तस्ततस्तस्या विशेषाधिकत्वात्तत्र पुद्गला विशेषाधिकाः २ । तेभ्य ईशाननैर्ऋतयोः प्रत्येकमसङ्ख्येयगुणाः, परस्परं तुल्याः, यतस्ते द्वे अपि दिशौ रुचकाशिर्गते मुक्तावलिसंस्थिते तिर्यगूर्ध्वाधोलोकान्तपर्यवसिते, तेन क्षेत्रस्यासङ्ख्ये-
यगुणत्वात्तत्रासङ्ख्येयगुणाः पुद्गलाः ३ । तेभ्यो वायव्याग्नेय्योर्विशेषाधिकाः, परस्परं तुल्याः । कथं विशेषाधिकाः ? इति चेदुच्यते, इह सौमनसगन्धमादनेषु सप्त सप्त कूटानि, विद्युत्प्रभमाल्यवतोर्नव नव, तेषु च कूटेषु भूमिकाऽवश्यायादिसू-
क्ष्मपुद्गलाः प्रभूताः सन्तीति विशेषाधिकाः । स्वस्थाने तु क्षेत्रस्य पर्वतादेश्च समानत्वात्तुल्याः ४ । तेभ्यः पूर्वस्यामसङ्ख्येय-
गुणाः, क्षेत्रस्यासङ्ख्येयगुणत्वात् ५ । तेभ्यः पश्चिमायां विशेषाधिकाः, अधोलौकिकग्रामेषु शुषिरभावतो बहूनां पुद्गलाना-
मवस्थानभावात् ६ । दक्षिणेन विशेषाधिकाः, बहुभवनशुषिरभावात् ७ । तेभ्य उत्तरस्यां विशेषाधिकाः, यत उत्तरस्या-
मायामविष्कम्भाभ्यां सङ्ख्येययोजनकोटीकोटीप्रमाणं मानससरस्तत्र ये जलचराः पनकसेवालादयश्च सत्त्वास्तेऽतिबहव इति
तेषां ये तैजसकार्मणपुद्गलास्तेऽधिकाः प्राप्यन्ते ८ ॥ १०७ ॥ १०८ ॥

**णंताणु १ पएस २ अणू ३ संखाणु ४ पएसया ५ असंखाणू ६।**
**अंसा य ७ थोव १ णंता दो ३ संखा दो ५ दुगमसंखं ७ ॥ १०९ ॥**

द्रव्यार्थतयानन्ताणवः स्तोकाः १, त एव प्रदेशार्थतयानन्तगुणाः २ । परमाणवो द्रव्यार्थतया प्रदेशार्थतया चानन्त-
गुणाः ३ । सङ्ख्यातप्रदेशिका द्रव्यार्थतया सङ्ख्यातगुणाः ४, त एव प्रदेशार्थतया सङ्ख्यातगुणाः ५ । असङ्ख्यातप्रदेशिका
द्रव्यार्थतयाऽसङ्ख्यातगुणाः ६, त एव प्रदेशार्थतयाऽसङ्ख्यातगुणाः ७ ॥ १०९ ॥

एकगुणकाला द्रव्यतः सङ्ख्येयगुणाः ४ । त एवैकगुणकालाः प्रदेशतः सङ्ख्येयगुणाः ५ । असङ्ख्याताणुका एकगुणकाला द्रव्यतोऽसङ्ख्येयगुणाः ६ । त एवैकगुणकालाः प्रदेशतोऽसङ्ख्येयगुणाः ७ । एवमनन्ताणुकाः सङ्ख्येयगुणकाला द्रव्यतः स्तोकाः १ । त एव सङ्ख्येयगुणकालाः प्रदेशतोऽनन्तगुणाः २ । अणवः सङ्ख्येयगुणकालाः द्रव्यप्रदेशार्थाभ्यामनन्तगुणाः ३ । सङ्ख्याताणुकाः सङ्ख्येयगुणकाला द्रव्यतः सङ्ख्येयगुणाः ४ । त एव सङ्ख्येयगुणकालाः प्रदेशतः सङ्ख्येयगुणाः ५ । असङ्ख्याताणुकाः सङ्ख्येयगुणकाला द्रव्यार्थतयाऽसङ्ख्येयगुणाः ६ । त एव सङ्ख्येयगुणकालाः प्रदेशतोऽसङ्ख्येयगुणाः ७ । एवमनन्ताणुकादयोऽसङ्ख्यातगुणकाला अनन्तगुणकालका वाच्याः ७ । एवं शेषवर्णगन्धरसस्पर्शा अपि । परं कर्कशादय एकप्रदेशाद्यवगाढवद्वाच्याः । यथा एकप्रदेशावगाढा एकगुणकर्कशाः स्तोकाः १ । सङ्ख्येयप्रदेशावगाढा एकगुणकर्कशा द्रव्यतः सङ्ख्येयगुणाः २ । त एव प्रदेशतः सङ्ख्येयगुणाः ३ । असङ्ख्येयप्रदेशावगाढा एकगुणकर्कशा द्रव्यतोऽसङ्ख्येयगुणाः ४ । त एव प्रदेशार्थतयाऽसङ्ख्येयगुणाः ५ । एवं सङ्ख्येयासङ्ख्येयानन्तगुणकर्कशादयोऽपि वाच्याः । एवं मृदुगुरुलघवः । एतद्गाथाभावना वृत्तावतिदेशेनोक्ता प्रज्ञापनासूत्रात्संभाव्य लिखितास्तीति ज्ञेयम् ॥ १११ ॥

जह दुपएसोगाढा दवट्ठाए उ कप्पिय सहस्सं । ते उ पएसट्ठाए दु च्चिय इय कालभावावि ॥ ११२ ॥
खंधा अणवो वा जे एगपएसावगाहिणो ते उ । लोगपएसपमाणा इक्किक्के जमवगाढ त्ति ॥ ११३ ॥
ते चेव दुगाइसु जे ओगाढा ते भवंति बहुयतरा । संजोगबहुत्तेणं(दारं २६)इओ महादंडयं भणिमो ॥११४॥

'जह' द्वावेव सहस्रौ क्षेत्रप्रदेशार्थाधिकारात् ॥११२॥ 'खंधा' ॥११३॥ 'ते चेव' द्वारम् २६ । इतो महादण्डकं भणामः ॥

छट्ठाइ १३ सहस्सारे १४ महसुक्के १५ पंचमाइ १६ लंतम्मि १७।
पंकाइ १८ बंभलोए १९ तच्चा पुढवीइ २० माहिंदे २१ ॥ ११८ ॥
कमसो असंखगुणिया सणंकुमारे य२२हुंतसंखिज्जा। दुच्चाए२३असंखिज्जा मुच्छिममणुयावि२४एमेव ॥
तेसिं तु असंखगुणा ईसाणसुरा उ२५संखदेवी उ २६। सोहम्मकप्पदेवा२७देवी संखिज्ज २८ कमसो य ॥

षष्ठपृथिवीनारका असङ्ख्येयगुणाः १३। सहस्रारदेवा असङ्ख्येयगुणाः १४। महाशुक्रेऽसङ्ख्येयगुणाः, यतः सहस्रारे षट् महाशुक्रे चत्वारिंशत् सहस्राणि विमानानाम्, अधोऽधोविमानेषु देवानां बहुबहुतरत्वाच्च १५। पञ्चमपृथिव्यां १६ लान्तके १७ चतुर्थ्यां पङ्कप्रभायां १८ ब्रह्मलोके १९ तृतीयस्यां वालुकायां २० माहेन्द्रे २१ सनत्कुमारे २२ द्वितीयस्यां शर्करायां २३ यथोत्तरमसङ्ख्येयासङ्ख्येयगुणाः। एते च सप्तमपृथिवीनारकादयो द्वितीयपृथिवीनारकान्ताः प्रत्येकं स्वस्थाने सर्वेऽपि घनीकृतलोकश्रेण्यसङ्ख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणा द्रष्टव्याः। परं श्रेण्यसङ्ख्येयभागोऽसङ्ख्येयभेदभिन्नस्तत इत्थमसङ्ख्येयगुणा वाच्याः। संमूर्छिममनुष्या असङ्ख्येयगुणाः, ते ह्यङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनि तृतीयवर्गमूलेन गुणिते प्रथमवर्गमूले यावान् प्रदेशराशिस्तावत्प्रमाणानि खण्डानि यावन्त्येकस्यामेकप्रादेशिक्यां श्रेणौ भवन्ति तावत्प्रमाणाः २४ ॥ ११९ ॥ ईशाने देवा असङ्ख्येयगुणाः, यतोऽङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनि द्वितीयवर्गमूले तृतीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु घनीकृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाण

जलयरपुरिसा ३६ इत्थी ३७ वणपुरिसा ३८ इत्थि ३९ जोइसुर ४० इत्थी ४१।
कमसो संखिज्जगुणा विहगनपुंसा य संखिज्जा ४२ ॥ १२२ ॥
थल ४३ जलयरा ४४ नपुंसा चउरिंदिसमत्त हुंति संखगुणा ४५ ।
पंचिंदिय ४६ बेइंदिय ४७ तेइंदिय ४८ समत्त सविसेसा ॥ १२३ ॥

जलचरपञ्चेन्द्रियतिर्यक्पुरुषाः सङ्ख्येयगुणाः, बृहत्तरप्रतराङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगतनभःप्रदेशराशिप्रमाणत्वात् ३६। तेषां स्त्रियः सङ्ख्येयगुणाः, त्रिगुणत्वात् ३७। व्यन्तरदेवाः सङ्ख्येयगुणाः, यतः सङ्ख्येययोजनकोटीकोटीप्रमाणानि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावान् व्यन्तरदेवदेवीसमुदायः, तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पा व्यन्तरपुरुषा-३८।व्यन्तर्यः सङ्ख्येयगुणाः द्वात्रिंशद्गुणत्वात् ३९।ज्योतिष्कदेवाः सङ्ख्येयगुणाः, ते हि सामान्यतः षट्पञ्चाशदधिकशतद्वयाङ्गुलः प्रमाणानि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणाः, तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पास्ते ४०। ज्योतिष्कदेव्यः सङ्ख्येयगुणाः द्वात्रिंशद्गुणत्वात्४१।खचरपञ्चेन्द्रियनपुंसकाः सङ्ख्येयगुणाः४२॥१२२॥स्थलचरपञ्चेन्द्रियनपुंसकाः सङ्ख्येयगुणाः ४३ । जलचरपञ्चेन्द्रियनपुंसकाः सङ्ख्येयगुणाः ४४।पर्याप्तचतुरिन्द्रियाः सङ्ख्येयगुणाः ४५ । पर्याप्तपञ्चेन्द्रियाः संज्ञ्यसंज्ञिभेदा विशेषाधिकाः ४६ । पर्याप्तद्वीन्द्रिया विशेषाधिकाः ४७ । पर्याप्तत्रीन्द्रिया विशेषाधिकाः, यद्यपि पर्याप्तचतुरिन्द्रियादीनां पर्याप्तत्रीन्द्रियपर्यन्तानां प्रत्येकमङ्गुलासङ्ख्येयभागमात्राणि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणत्वेऽप्यङ्गुलसङ्ख्येयभागस्य सङ्ख्येयभेदभिन्नत्वादित्थं विशेषाधिकत्वं न विरुद्धम् ४८ ॥ १२३ ॥

पंचिंदिय अपजत्ता असंख ४९ चउ ५० तिंदि ५१ बिंदि ५२ सविसेसा ।
वणपत्तेयसमत्ता असंखगुणिया मुणेयव्वा ५३ ॥ १२४ ॥

अपर्याप्तपञ्चेन्द्रिया असङ्ख्यातगुणाः ४९ । अपर्याप्तचतुरिन्द्रिया विशेषाधिकाः ५० । अपर्याप्तत्रीन्द्रिया विशेषाधिकाः ५१ । अपर्याप्तद्वीन्द्रिया विशेषाधिकाः, यद्यपि चापर्याप्तपञ्चेन्द्रियादयोऽपर्याप्तद्वीन्द्रियपर्यन्ताः प्रत्येकमङ्गुलासङ्ख्येयभागमात्रखण्डानि सूचीरूपाणि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणा विशेषेणोक्तास्तथाप्यङ्गुलासङ्ख्येयभागस्य विचित्रत्वादित्थं विशेषाधिकत्वं न विरुद्धम् ५२ । प्रत्येकबादरवनस्पतिकायिकाः पर्याप्ता असङ्ख्येयगुणाः, यद्यपि चापर्याप्तद्वीन्द्रियादिवत्पर्याप्तबादरवनस्पतिकायिका अप्यङ्गुलासङ्ख्येयभागमात्राणि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणा अन्यत्रोक्तास्तथाप्यङ्गुलासङ्ख्येयभागस्यासङ्ख्येयभेदभिन्नत्वाद्बादरपर्याप्तप्रत्येकवनस्पतिपरिमाणचिन्तायामङ्गुलासङ्ख्येयभागोऽसङ्ख्येयगुणहीनो गृह्यते ततो न कश्चिद्विरोधः ५३ ॥ १२४ ॥

बायरनिगोअ समत्ता ५४ पुढवी ५५ आऊ ५६ वाऊ ५७ एमेव ।
कमसो असंखगुणिया ५८ बायरतेऊ असंपुन्ना ५८ ॥ १२५ ॥
पत्तेयवणं ५९ बायर निगोय ६० पुढवि ६१ जल ६२ वाउ ६३ तह चेव ।
सव्वे वि अपज्जत्ता असंखया सुहुमतेऊ अ ६४ ॥ १२६ ॥

बादरनिगोदा अनन्तकायिकशरीररूपाः पर्याप्ता असङ्ख्येयगुणाः ५४ । बादरपृथिवीकायिकाः पर्याप्ता असङ्ख्येयगुणाः ५५ । पर्याप्तबादराप्कायिका असङ्ख्येयगुणाः, यद्यपि पर्याप्तबादरप्रत्येकवनस्पतिकायिकपृथिव्यप्कायिकाः प्रत्येकमङ्गुलासङ्ख्येयभागमात्राणि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणा उक्तास्तथाप्यङ्गुलासङ्ख्येयभागस्यासङ्ख्येयभेदभिन्नत्वादित्थमसङ्ख्येयगुणत्वं न विरुद्धम् ५६ । पर्याप्तबादरवायुकायिका असङ्ख्येयगुणाः, घनीकृतलोकासङ्ख्येयभागवर्त्त्यसङ्ख्येयप्रतरगतनभःप्रदेशराशिप्रमाणत्वात् ५७ । अपर्याप्तबादराग्निकायिका असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशराशिप्रमाणत्वात् ५८ ॥ १२५ ॥ प्रत्येकबादरवनस्पतयोऽपर्याप्ता असङ्ख्येयगुणाः ५९ । अपर्याप्तबादरनिगोदा असङ्ख्येयगुणाः ६० । अपर्याप्तबादरपृथिवीकायिका असङ्ख्येयगुणाः ६१ । अपर्याप्तबादराप्कायिका असङ्ख्येयगुणाः ६२ । अपर्याप्तबादरवायुकायिका असङ्ख्येयगुणाः ६३ । अपर्याप्तसूक्ष्मतेजस्कायिका असङ्ख्येयगुणाः ६४ ॥ १२६ ॥

पुढवि ६५ जला ६६ निल ६७ सुहुमा असमत्त विसेस हुंति कमसो उ ।
सुहुमागणि पज्जत्ता ६८ संखिज्जगुणा उ नायव्वा ॥ १२७ ॥
सुहुमावणि ६९ जल ७० वाऊ ७१ पज्जत्त विसेस हुंतऽसंखिज्जा ।
सुहुमनिगोअ अपज्जत्तया उ ७२ पज्जत्त संखिज्जा ७३ ॥ १२८ ॥
अभव ७४ परिवडियदिट्ठी ७५ सिद्धा ७६ बायरवणा य पज्जत्ता ७७ ।
कमसो अणंतगुणिया बायरपज्जत्त सविसेसा ७८ ॥ १२९ ॥

बादरापर्याप्तवनस्पतयोऽसङ्ख्येयगुणाः, एकैकबादरनिगोदपर्याप्तनिश्रयाऽसङ्ख्येयगुणानां बादरापर्याप्तनिगोदानां संभवात् ७९। सामान्यतो बादरापर्याप्ता विशेषाधिकाः, बादरापर्याप्तपृथिवीकायिकादीनामपि तत्र प्रक्षेपात् ८०। सामान्यतो बादरा विशेषाधिकाः, पर्याप्तापर्याप्तानामपि तत्र प्रक्षेपात् ८१। सूक्ष्मवनस्पतयोऽपर्याप्ता असङ्ख्येयगुणाः ८२ ॥ १३० ॥ सामान्यतः सूक्ष्मापर्याप्ता विशेषाधिकाः, सूक्ष्मापर्याप्तपृथिव्यादीनामपि तत्र प्रक्षेपात् ८३। पर्याप्तसूक्ष्मवनस्पतयः सङ्ख्येयगुणाः, पर्याप्तसूक्ष्माणामपर्याप्तसूक्ष्मेभ्यः स्वभावत एव सङ्ख्येयगुणत्वात् ८४। सामान्यतः सूक्ष्माः पर्याप्ता विशेषाधिकाः, पर्याप्तसूक्ष्मपृथिव्यादीनामपि तत्र प्रक्षेपात् ८५। सामान्येन सूक्ष्मा विशेषाधिकाः, अपर्याप्तानामपि तत्र प्रक्षेपात् ८६। भवसिद्धिका भव्या विशेषाधिकाः, जघन्ययुक्तानन्तकमात्राभव्यपरिहारेण सर्वजीवानां भव्यत्वात् ८७। सामान्यतो निगोदजीवा विशेषाधिकाः, इह भव्या अभव्याश्चातिप्राचुर्येण बादरसूक्ष्मनिगोदजीवराशावेव प्राप्यन्ते नान्यत्र। अन्येषां सर्वेषामपि मिलितानामसङ्ख्येयलोकाकाशप्रदेशराशिप्रमाणत्वात्। अभव्याश्च युक्तानन्तकसङ्ख्यामात्रपरिमाणास्ततो भव्यापेक्षया ते किञ्चिन्मात्राः। भव्याश्च प्रागभव्यपरिहारेण चिन्तिताः। इदानीं तु बादरसूक्ष्मनिगोदचिन्तायां तेऽपि प्रक्षिप्यन्ते इति विशेषाधिकाः ८८। सामान्यतो वनस्पतयो विशेषाधिकाः, प्रत्येकवनस्पतीनामपि तत्र प्रक्षपात् ८९ ॥ १३१ ॥

एगिंदि ९० तिरिक्खा ९१ मिच्छदिट्ठी ९२ अविरय ९३ तहेव सकसाया ९४।
छउमत्थ ९५ सजोगि ९६ भवत्थ ९७ सव्व ९८ सव्वे विसेसहिया ॥ १३२ ॥

इय अट्ठाणउइपयं सव्वजियप्पबहुमिइ पयं तइयं। पण्णवणाए सिरिअभयदेवसूरीहिं संगहियं ॥ १३३ ॥

सामान्यत एकेन्द्रिया विशेषाधिकाः, बादरसूक्ष्मपृथिव्यादीनामपि तत्र प्रक्षेपात् ९० । सामान्यतस्तिर्यञ्चो विशेषा-
धिकाः, पर्याप्तापर्याप्तद्वीन्द्रियादीनामपि तत्र प्रक्षेपात् ९१ । चतुर्गतिभाविनो मिथ्यादृष्टयो विशेषाधिकाः, इह कतिपया-
विरतसम्यग्दृष्ट्यादिसंज्ञिव्यतिरेकेण शेषाः सर्वेऽपि तिर्यञ्चो मिथ्यादृष्टिचिन्तायां चासङ्ख्येयनारकादयस्तत्र प्रक्षिप्यन्ते तत-
स्तिर्यग्जीवापेक्षया चतुर्गतिका मिथ्यादृष्टयश्चिन्त्यमाना विशेषाधिकाः ९२ । अविरता विशेषाधिकाः, अविरतसम्यग्दृष्टी-
नामपि तत्र प्रक्षेपात् ९३ । सकषायिणो विशेषाधिकाः, देशविरतादीनामपि तत्र प्रक्षेपात् ९४ । छद्मस्था विशेषाधिकाः,
उपशान्तमोहादीनामपि तत्र प्रक्षेपात् ९५ । सयोगिनो विशेषाधिकाः, सयोगिकेवलिनामपि तत्र प्रक्षेपात् ९६ । संसारस्था
विशेषाधिकाः, अयोगिकेवलिनामपि तत्र प्रक्षेपात् ९७ । सर्वजीवा विशेषाधिकाः, सिद्धानामपि तत्र प्रक्षेपात् ९८ ॥ १३२ ॥
इत्युक्तप्रकारेण प्रक्रमादस्मिन्महादण्डके भावप्रधानत्वान्निर्देशस्य सर्वजीवाल्पबहुत्वमुक्तम् । अष्टानवतिसङ्ख्यानि गर्भजम-
नुष्यादीनि पदानि यस्मिंस्तत्तथा । अथ समर्थयन्नाह—इति पदं तृतीयं दिगादिसप्तविंशतिद्वारात्मकं बहुवक्तव्याभिधानं
प्रज्ञापनायाः श्रीअभयदेवसूरिभिः संगृहीतं बहुभव्योपकारिसारार्थसंग्रहेणेति ॥ १३३ ॥

## ॥ समाप्तेयं सावचूरिका प्रज्ञापनोपाङ्गतृतीयपदसङ्ग्रहणी ॥